खौं खः रक्त-वर्ण-शरीरे महा-घोर-रावे शर-वाण-हस्ते वराभयाङ्कित-चारु-हस्ते हूँ हूँ हूँ फट् चतुर्दश-भुवन-मालिनि चतुर्दश-विद्याधीश्वरि चतुर्वेदाध्यायिनि चातुर्वर्ण्य-एकाकार-कारिणि कान्ति-दायिनि महा-घोर-घोर-तरे अघोरामुखि अघोर-मूर्ध्नि-संस्थिते परापर-पर-ब्रह्माधिरूढिनि ह्रीं ढ्रीं क्षीं फट् ॐ ऐं ॐ क्लीं ॐ सौः श्रीं ऐं ऐं ऐं हसैं स्हैं ॐ ह्लः कफट् पञ्च-प्रेतासने महा-मोक्ष-दात्री ॐ हूँ फट् ह्लः फट् छ्रां छ्रीं छ्रीं ॐ जगद्योनि-रूपे योनि-सर्प-विभूषिणि योनि-सृक्-शिर-भूषिणि योनि-मालिनि योनि-सङ्कोचिनि योनि-मध्य-गते द्रां द्रीं द्रूं क्षौं हः फट् क्षां यां रां लां वां शां हां ॐ

ॐ फट् ऐं हूँ फट् क्लीं हूँ फट् सौः हुँ फट् श्मशान-वासिनि श्मशान-भस्म-लेपिनि श्मशानाङ्गार-निलये शवारूढे शव-मांस-भक्ष-महा-प्रिये शव-परित-व्याप्ति-हाहा-शब्दाति-प्रिये डामरि भूतिनि योगिनि डाकिनि राक्षसि सह-विहारिणि परा-प्रासाद-गेहिनि भस्मोलेप-कार-विभूषिते फ्रं ख्फ्रें हस्फ्रें क्ष्फ्रें हस्क्ष्फ्रें सह्ख्फ्रें गां गीं गूं सः फट् क्स्त्रीं चस्त्रीं ढ्स्त्रीं हस्त्रीं क्षस्त्रीं फट् गिरि-निवासिनि गिरि-पुष्प-संशोभिनि गिरि-पुत्रि गिरि-धारिणि गीत-वाद्य-विमोहिनि त्रैलोक्य-मोहिनि देवि दिव्याङ्ग-वस्त्र-धारिणि दिव्य-ज्ञान-प्रदे

दिविषद्-मातें सिद्धि-प्रदे सिद्धि-स्वरूपे सिद्धि-विद्योता-तीतातीते ख-मार्ग-प्रचारिणि खगेश्वरि खड्ग-हस्तिनि खं-बीज-मध्य-गतं ॐ ऐं ॐ ह्रीं ॐ श्रीं ॐ फट् तां तीं तूं तैं तौं तः हां हीं हूं हैं हौं हः वां वीं वूं वैं वौं वः च्फ्रें ह्फ्रें क्ष्रें अं कं चं टं तं पं यं शं मातृका-चक्र-चक्रे हासिनि ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः श्लीं हूँ फट् अं आं ऐं इं ईं ऐं उं ऊं ऐं ऋं ॠं ऐं एं ऐं ऐं ओं औं ऐं अं अः ऐं फट् । निर्वाण-रूपे निर्वाणातीते निर्वाण-दात्रि निरंकुशिनि निराकारे निरञ्जनावतारिणि षट्-चक्रे-श्वरि सहस्रात्मे महा-सूक्ष्म-सूक्ष्मे सूक्ष्मातीत-सूक्ष्म-नाम-रूपिणि महा-प्रलयान्त-एक-शेषाक्षिणि संसाराब्धि-दुःख-तारिके सृष्टि-स्थित्यन्त-कारिके क्मांलांवुंयूं ग्मांलांवुंयूं स्मौंलांवुंयूं क्ष्मांलांवुंयूं ह्रीं धं छिंधि सुबुद्धि दद दद मोक्ष-मार्गं दर्शय दर्शय तवानुचरं कुरु कुरु हिरि हिरि धिमि धिमि धिमि महा-डमरु-वादन-महा-प्रिये आं हूँ हूँ हूँ हूँ फट् मम हृदये तिष्ठ तिष्ठ सुफलं देहि देहि । ४७ । सर्व-तीर्थ-फलं प्रदापय प्रदापय सर्व-दान-फलं प्रापय प्रापय ज्योति-स्वरूपिणि सर्व-योग-फलं कुरु कुरु स्फ्रों क्रों ह्रीं ऐं क्लीं सौः स्वाहा । श्रीमद्-बालायै स्वाहा ।

इति बालार्णवे श्रीबाला-देव्याः सहस्राक्षरी-स्तोत्रं सम्पूर्णम् ।

# श्री बाला स्तव-राजः

श्री पार्वत्युवाच—

गुणाधीश महादेव रहस्यं वद सत्वरम् ।
बाला-देव्या परं श्रेष्ठं स्तव-राजं कथं प्रभो ॥१॥

ईश्वर उवाच—

शृणु प्राणेश्वरि वक्ष्ये स्तव-राजं महा-फलम् ।
यन्न कस्यचिदाख्यातं गोप्यं कुरु सदाऽनघे ॥२॥
तव भक्त्या महेशानि अकथ्यं कथ्यतेऽधुना ।
गोपनं कुरु रुद्राणि गोपयेन्मातृ-जार-वत् ॥३॥

ॐ अस्य श्री बाला-स्तव-राज-स्तोत्रस्य श्री मृत्युञ्जय ऋषिः । ककुप्छन्दः । श्री बाला देवता । क्लीं वीजं । सौः शक्तिः । ऐं कीलकम् । भोग-मोक्षार्थे जपे विनियोगः ।

त्रि-वीज-भाजा-युक्तेन कराङ्गौ न्यासमाचरेत् ।
ध्यानं ततो शृणुष्वाशु सर्वैश्वर्य-प्रदायकम् ॥४॥
अक्ष-पुस्त-धरां रक्तां वराभय-कराम्बुजाम् ।
चन्द्र-मुण्डां त्रिनेत्रां च ध्यायेद् बालां फल-प्रदाम् ॥५॥

ऐं त्रैलोक्य-विजयायै हुं फट् । क्लीं त्रिगुण-रहितायै हुं फट् । सौः सर्वैश्वर्य-दायिन्यै हुं फट् ॥६॥

नातः पर-तरा सिद्धिर्नातः पर-तरा गतिः ।

नातः पर-तरो मन्त्रस्सत्यं सत्यं वदाम्यहम् ॥७॥
रक्तां रक्तच्छदां तीक्ष्णां रक्तपां रक्त-वाससीम् ।
स्वरूपां रत्न-भूषां च ललज्जिह्वां परां भजे ॥८॥
त्रैलोक्य-जननीं सिद्धां त्रिकोणस्थां त्रिलोचनां ।
त्रिवर्ग-फलदां शान्तां वन्दे वीज-त्रयात्मिकाम् ॥९॥
श्रीबालां वारुणी-प्रीतां बालार्क-कोटि-द्योतिनीम् ।
वरदां बुद्धिदां श्रेष्ठां वामाचार-प्रियां भजे ॥१०॥
चतुर्भुजां चारु-नेत्रां चन्द्रमौलिं कपालिनीम् ।
चतुःषष्ठि-योगिनीशां वीर-वन्द्यां भजाम्यहम् ॥११॥
कौलिकां कुल-तत्वस्थां कौलाबाराङ्क-वाहनाम् ।
कौसुम्भ-वर्णां कौमारीं कवर्ग-धारिणीं भजे ॥१२॥
द्वादश-स्वर-रूपायै नमस्तेऽस्तु नमो नमः ।
नमो नमस्ते बालायै कारुण्यायै नमो नमः ॥१३॥
विद्याविद्याद्य-विद्यायै नमस्तेऽस्तु नमो नमः ।
विद्या-राज्ञै महा-देव्यै शिवायै सततं नमः ॥१४॥
ऐं बालायै विद्महे क्लीं त्रिभुवनेश्वर्यै धीमहि ।
सौः तन्नो देवी प्रचोदयात् । ऐं बालायै स्वाहा ।
द्वादशान्तालयां श्रेष्ठां षोडशाधारगां शिवाम् ।
पञ्चेन्द्रिय-स्वरूपाख्यां भूयो भूयो नमाम्यहम् ॥१५॥
ब्रह्म-विद्यां ब्रह्म-रूपां ब्रह्म-ज्ञान-प्रदायिनीम् ।
वसु-प्रदां वेद-मातां वन्दे बालां शुभाननाम् ॥१६॥

अघोरां भीषणामाद्यामनन्तोपरि-संस्थिताम् ।
देव-देवेश्वरीं भद्रां श्रीबालां प्रणमाम्यहम् ॥१७॥
भव-प्रियां भवाधरां भग-रूपां भग-प्रियाम् ।
भयानकां भूत-मातां भू-देव-पूजितां भजे ॥१८॥
अकारादि-क्षकारान्तां क्लीवाक्षरात्मिकां पराम् ।
वन्दे वन्दे महा-मायां भव-भव्य-भयापहाम् ॥१९॥
नाडी-रूप्यै नमस्तेऽस्तु धातु-रूप्यै नमो नमः ।
जीव-रूप्यै नमस्यामि ब्रह्म-रूप्यै नमो नमः ॥२०॥
नमस्ते मन्त्र-रूपायै पीठगायै नमो नमः ।
सिंहासनेश्वरि तुभ्यं सिद्धि-रूप्यै नमो नमः ॥२१॥
नमस्ते मातृ-रूपिण्यै नमस्ते भैरव-प्रिये ।
नमस्ते चोप-पीठायै बालायै सततं नमः ॥२२॥
योगेश्वर्यै नमस्तेऽस्तु योगदायै नमो नमः ।
योग-निद्रा-स्वरूपिण्यै बाला-देव्यै नमो नमः ॥२३॥
सुपुण्यायै नमस्तेऽस्तु सुशुद्धायै नमो नमः ।
सुगुह्यायै नमस्तेऽस्तु बाला-देव्यै नमो नमः ॥२४॥
योनि-प्रियायै योन्यै वै योनि-रूप्यै नमो नमः ।
योनि-सर्पि विलेपिन्यै योनिस्थायै नमो नमः ॥२५॥
इतीदं स्तव-राजाख्यं सर्व-स्तोत्रोत्तमोत्तमम् ।
ये पठन्ति महेशानि पुनर्जन्म न विद्यते ॥२६॥
महा-कष्टे महा-रोगे त्रिधा वा पञ्चधा पठेत् ।

महा-कष्टं महा-रोगं नश्यते नात्र संशयः ॥२७॥
सर्व-पाप-हरं पुण्यं सर्व-स्फोट-विनाशकम् ।
सर्व-सिद्धि-प्रदं श्रेष्ठं भोगैश्वर्य-प्रदायकम् ॥२८॥
यज्ञानां षोडशानां च कोटि-कोटि-गुणोत्तरम् ।
फलं प्राप्नोति पाठेन चैक-वारेण सुन्दरि ॥२९॥
षोडशानां च दानानां कोट्यर्बुद-फलं स्मृतम् ।
पाठ-मात्रेण लभते नात्र कार्या विचारणा ॥३०॥
पूजान्ते पठते स्तोत्रं मैथुने च विशेषतः ।
पठेच्च चक्र-पूजायां फलं वक्तुं न शक्यते ॥३१॥
विशेषतश्चार्ध-रात्रे ये पठन्ति महेश्वरि ।
सर्वारिष्टानि नश्यन्ति लभते वाञ्छितं फलम् ॥३२॥
धातृ-मूले बिल्व-मूले वट-धत्तूर-मूलके ।
मुण्डोपरि शव-पृष्ठे श्मशाने च चतुष्पथे ॥३३॥
शिवागारे शून्य-गेहे चैक-लिङ्गे शिवाग्रके ।
दुर्ग-पर्वते चोद्याने वारुणी-घटे चार्चने ॥३४॥
पठेत्स्तोत्रं सदा भक्त्या त्रैलोक्य-विजयी भवेत् ।
रजस्वला-भगं स्पृष्ट्वा पठेदेकाग्र-मानसः ॥३५॥
सत्यं सत्यं वरारोहे लभते परमं पदम् ।
तस्मात्सर्व-प्रयत्नेन पठनीयं सदा बुधैः ॥३६॥

इति श्रीब्रह्म-यामल-तन्त्रे श्रीबाला-देव्याः स्तव-राजः ।

# श्री बाला मकरन्द-स्तवम्

श्री रुद्र उवाच—

शृणु देवि प्रवक्ष्यामि मकरन्द-स्तवं शुभम् ।
गोप्याद्-गोप्यतरं गोप्यं महा-कौतूहलं परम् ॥ १ ॥
बालायाः परमेशान्याः स्तोत्र-चूडामणिः शिवे ।
मकरन्दस्य स्तोत्रस्य ऋषिर्नारद-संज्ञकः ॥ २ ॥
छन्दोऽनुष्टुपुदाख्यातं श्रीबाला देवता स्मृता ।
ऐं बीजं शक्तिः सौः प्रोक्तं कीलकं क्लीं तथैव च ॥ ३ ॥
भोग-मोक्षस्य सिद्धयर्थे विनियोगः प्रकीर्तितः ।
नमस्तेऽस्तु परां शक्तिं नमस्ते भक्त-वत्सले ॥ ४ ॥
नमस्तेऽस्तु गुणातीतां बालां सिद्धि-प्रदाम्बिकाम् ।
भव-दुःखाब्धि-तारन्तीं परां निर्वाण-दायिनीम् ॥ ५ ॥
धनदां ज्ञानदां सत्यां श्रीबालां प्रणमाम्यहम् ।
सिद्धि-प्रदां ज्ञान-रूपां चतुर्वर्ग-फल-प्रदाम् ॥ ६ ॥
आधि-व्याधि-हरां वन्दे श्रीबालां परमेश्वरीम् ।
ऐंकार-रूपिणीं भद्रां क्लींकार-गुण-सम्भवाम् ॥ ७ ॥
सौःकार-रूप-रूपेशीं बालां बालार्क-सन्निभाम् ।
ऊर्ध्वाम्नायेश्वरीं देवीं रक्तां रक्त-विलेपनाम् ॥ ८ ॥
रक्त-वस्त्र-धरां सौम्यां श्रीबालां प्रणमाम्यहम् ।
राज-राजेश्वरीं देवीं रजोगुणात्मिकां भजे ॥ ९ ॥

ब्रह्म-विद्यां महा-मायां त्रिगुणात्मक-रूपिणीम् ।
पञ्च-प्रेतासनस्थां च पञ्च-मकार-भक्षकाम् ॥ १० ॥
पञ्च-भूतात्मिकां चैव नमस्ते करुणामयीम् ।
सर्व-दुःख-हरां दिव्यां सर्व-सौख्य-प्रदायिनीम् ॥ ११ ॥
सिद्धिदां मोक्षदां भद्रां श्रीबालां भावयाम्यहम् ।
नमस्तस्यै महादेव्यै देव-देवेश्वरि परे ॥ १२ ॥
सर्वोपद्रव-नाशिन्यै बालायै सततं नमः ।
गुह्याद्-गुह्य-तरां गुप्तां गुह्येशीं देव-पूजिताम् ॥ १३ ॥
हर-मौलि-स्थितां देवीं बालां वाक्सिद्धिदां शिवां ।
ब्रह्मांहीं सोम-तिलकां सोम-पान-रतां पराम् ॥ १४ ॥
सोम-सूर्याग्नि-नेत्रां च वन्देऽहं हर-वल्लभाम् ।
अचिन्त्याकार-रूपाख्यां ॐकाराक्षर-रूपिणीम् ॥ १५ ॥
त्रिकाल-सन्ध्या-रूपाख्यां भजामि भक्त-तारिणीम् ।
कीर्तिदां योगदां रादां सौख्य-निर्वाणदां तथा ॥ १६ ॥
मन्त्र-सिद्धि-प्रदामीडे सृष्टि-स्थित्यन्त-कारिणीम् ।
नमस्तुभ्यं जगद्धात्रे जगत्तारिणि चाम्बिके ॥ १७ ॥
सर्व-वृद्धि-प्रदे देवि श्रीविद्यायै नमोऽस्तु ते ।
दया-रूप्यै नमस्तेऽस्तु कृपा-रूप्यै नमोऽस्तु ते ॥ १८ ॥
शान्ति-रूप्यै नमस्तेऽस्तु धर्म-रूप्यै नमो नमः ।
पूर्ण-ब्रह्म-स्वरूपिण्यै नमस्तेऽस्तु नमो नमः ॥ १९ ॥
ज्ञानार्णवायै सर्वायै नमस्तेऽस्तु नमो नमः ।
पूतात्मायै परात्मायै महात्मायै नमो नमः ॥ २० ॥

आधार-कुण्डली-देव्यै भूयो भूयो नमाम्यहम् ।
षट्-चक्र-भेदिनी पूर्णा षडाम्नायेश्वरी परा ॥ २१ ॥
परा-परात्मिका सिद्धा श्रीबाला शरणं मम ।
इदं श्री मकरन्दाख्यं स्तोत्रं सर्वागमोक्तकम् ॥ २२ ॥
स्तोत्र-राजमिदं देवि धारय त्वं कुलेश्वरि ।
भोजने मैथुने दुर्गे सुरा-पात्रे गुरोर्गृहे ॥ २३ ॥
एक-लिङ्गे शून्य-गेहे नदी-सङ्गम-गोकुले ।
राज-द्वारे चिप्तराधे देवालये चतुष्पथे ॥ २४ ॥
पुण्य-तीर्थे कौलिकाग्रे वेश्या-गेहे सुरालये ।
पठेत् स्तोत्रं महेशानि चान्द्रायण-शतं लभेद् ॥ २५ ॥
अश्वमेधादि-यज्ञानां तुला-दानादिकादिनाम् ।
गङ्गादि-सर्व-तीर्थानां पठनात्-फलमाप्नुयात् ॥ २६ ॥
न देयं पर-निन्देभ्यो गुरु-द्वेष-कराय च ।
पशु-मार्ग-रतेभ्यश्च नैव देयं सदा प्रिये ॥ २७ ॥
पुण्यं यशस्यमायुष्यं देवानामपि दुर्लभम् ।
पाठ-मात्रेण देवेशि सर्वारिष्टं विनश्यति ॥ २८ ॥
डाकिनी-भूत-प्रेतानां योगिनी-राक्षसादीनाम् ।
कूष्माण्ड-भैरवादीनां पशु-पक्षि-मृगादिनाम् ॥ २९ ॥
किन्नराणाञ्च नागानां वैरिणां दानवादिनाम् ।
यक्षाणां यक्षिणीनाञ्च ग्रह-बेतालकादिनाम् ॥ ३० ॥
डाकानां गाणपत्यानां प्रमथानां नरादिनाम् ।
राज्ञां मन्त्रिणां चैव प्रजानां च पिशाचिनाम् ॥ ३१ ॥

कबन्धानां पूतनानां अपस्मार-ग्रहादिनाम् ।
आकाश-चारिणीनां च बाल-ग्रहादिनाम् तथा ।। ३२ ।।
पठनान्नश्यते कान्ते दोषान्नाशयते ध्रुवम् ।
गोप्यं कुरु कुलेशानि त्रि-सत्यं मम भाषितम् ।। ३३ ।।
गोप्यान्मोक्ष-प्रदं चैव प्रकाशान्मृत्युमाप्नुयात् ।
भक्ति-हीनाय पुत्राय दत्वा नरकमाप्नुयात् ।। ३४ ।।
सुशीलाय सुपुण्याय दत्वा शुभ-फलं लभेद् ।

इति श्रीरुद्र-यामले तन्त्रे शिव-पार्वती-सम्वादे

श्रीबाला-देव्या मकरन्द-स्तवं ।

# श्री बाला भुजङ्ग-स्तोत्रम्

श्री नील-लोहित उवाच—

जगद्योनि-रूपां सुवेशीं च रक्तां गुणातीत-संज्ञां महा-गुह्य-गुह्याम् । महा-सर्प-भूषां भवेशादि-पूज्यां महात्युग्र-बालां भजेऽहं हि नित्याम् ॥ १ ॥

महा-स्वर्ण-वर्णां शिव-पृष्ठ-संस्थां महा-मुण्ड-मालां गले शोभमानां । महा-चर्म-वस्त्रां महा-शङ्ख-हस्तां महात्युग्र-बालां भजेऽहं हि नित्याम् ॥ २ ॥

सदा सुप्रसन्नां भृता-सूक्ष्म-सूक्ष्मां वराभीति-हस्तां धृताक्षाक्ष-पुस्ताम् । महा-किन्नरेशीं भगाकार-विद्यां महात्युग्र-बालां भजेऽहं हि नित्याम् ॥ ३ ॥

तिनीं तीकिनीनां रवा किङ्किणीनां हहाहा हहाहा महालाप-शब्दाम् । तथैथै तथैथै महा-नृत्य-नृत्यां महा-त्युग्र-बालां भजेऽहं हि नित्याम् ॥ ४ ॥

ननाना रिरीरी महागीश शम्वू हुहूवू हुहूवू पशो रक्तपानाम् । धिमिन्धीं धिमिन्धीं मृदङ्गस्य शब्दां महात्युग्र-बालां भजेऽहं हि नित्याम् ॥ ५ ॥

महा-चक्र-संस्थां त्रि-मात्रा-स्वरूपां शिवार्धाङ्ग-भूतां महा-पुष्प-मालाम् । महा-दुःख-हर्त्रीं महा-प्रेत-संस्थां महात्युग्र-बालां भजेऽहं हि नित्याम् ॥ ६ ॥

स्फुरत्पद्म-वक्त्रां हिमांशो कलापां महा-कोम-
लाङ्गीं सुरेशे नमान्याम् । जगत्पालमेकाग्र-चित्तां
सुपुष्टां महात्युग्र-बालां भजेऽहं हि नित्याम् ॥ ७ ॥

महा-दैत्य-नाशीं सुरा-नित्य-पालीं महा-बुद्धि-राशिं
कवीनां मुखस्थाम् । जटीनां हृदिस्थां मनूनां शिरस्थां
महात्युग्र-बालां भजेऽहं हि नित्याम् ॥ ८ ॥

भुजाङ्गाख्यं महा-स्तोत्रं त्रिषु लोकेषु दुर्लभम् ।
महा-सिद्धि-प्रदं दिव्यं चतुर्वर्ग-फल-प्रदं ॥ ९ ॥

सर्व-क्रतु-फलं भद्रे सर्व-व्रत-फलं तथा ।
सर्व-दानोद्भवं पुण्यं लभते नात्र संशयः ॥ १० ॥

विवादे कलहे घोरे महा-दुःखे पराजये ।
ग्रह-दोषे महा-रोगे पठेत् स्तोत्रं विचक्षणः ॥ ११ ॥

सर्व-दोषाः विनश्यन्ति लभते वांछितं फलम् ।
दूती-यागे पठेद्देवि सर्व-शत्रु-क्षयो भवेत् ॥ १२ ॥

महा-चक्रे पठेद्देवि लभते परमं पदम् ।
पूजान्ते पठते भक्त्या महा-बलि-फल-प्रदं ॥ १३ ॥

पितृ-गेहे तुर्य-पथे शून्यागारे शिवालये ।
बिल्व-मूले चैक-वृक्षे रतौ मधु-समागमे ॥ १४ ॥

पठेत् स्तोत्रं महेशानि जीवन्मुक्तस्स उच्यते ।
त्रि-कालं पठते नित्यं देवी-पुत्रत्वमाप्नुयात् ॥ १५ ॥

इति श्रीकालानल-तन्त्रे श्रीबालायाः भुजङ्ग-स्तोत्रम ।

# श्री बाला मुक्तावली-स्तोत्रम्

बालार्क-कोटि-रुचिरां कोटि-ब्रह्माण्ड-भूषिताम् ।
कन्दर्प-कोटि-लावण्यां बालां वन्दे शिव-प्रियाम् ॥ १ ॥
वह्नि-कोटि-प्रभां सूक्ष्मां कोटि-कोटि हेलिनीं ।
वरदां रक्त-वर्णां च बालां वन्दे सनातनीम् ॥ २ ॥
ज्ञान-रत्नाकरां भीमां पर-ब्रह्मावतारिणीं ।
पञ्च-प्रेतासन-गतां बालां वन्दे गुहाशयाम् ॥ ३ ॥
परा-प्रासाद-मूर्ध्निस्थां पवित्रां पात्र-धारिणीं ।
पशु-पाशच्छिदां तीक्ष्णां बालां वन्दे शिवाननाम् ॥४॥
गिरिजां गिरि-मध्यस्थां गीःरूपां ज्ञान-दायिनीम् ।
गुह्य-तत्व-परां चाद्यां बालां वन्दे पुरातनीम् ॥ ५ ॥
बौद्ध-कोटि-सुसौन्दर्यां चन्द्र-कोटि-सुशीतलाम् ।
आशा-वासां परां देवीं वन्दे बालां कपर्दिनीम् ॥ ६ ॥
सृष्टि-स्थित्यन्त-कारिण्यां त्रिगुणात्मक-रूपिणीम् ।
काल-ग्रसन-सामर्थ्यां बालां वन्दे फल-प्रदाम् ॥ ७ ॥
यज्ञ-नाशिं यज्ञ-देहां यज्ञ-कर्म-शुभ-प्रदाम् ।
जीवात्मां विश्व-जननीं बालां वन्दे परात्पराम् ॥ ८ ॥
इत्येतत् परमं गुह्यं नाम्ना मुक्तावली-स्तवम् ।
ये पठन्ति महेशानि फलं वक्तुं न शक्यते ॥ ९ ॥
गुह्याद्-गुह्य-तरं गुह्यं महा-गुह्यं वरानने ।

विद्यार्थी लभते विद्यां धनार्थी लभते धनम् ॥१०॥
कन्यार्थी लभते कन्यां मोक्षार्थी मोक्षमाप्नुयात् ।
बहुनात्र किमुक्तेन चिन्ता-मणिरिवापरम् ॥११॥
गोपनीयं प्रयत्नेन गोपनीयं न संशयः ।
अन्येभ्यो नैव दातव्यं किमन्यच्छ्रोतुमिच्छसि ॥१२॥

इति श्रीविष्णु-यामले श्रीबाला-देव्या मुक्तावली स्तोत्रम् ।

# श्रीबाला पञ्च-चामर-स्तवम्

गिरीन्द्र-राज-बालिकां दिनेश-तुल्य-रूपिकाम् ।
प्रवाल-जाप्य-मालिकां भजामि दैत्य-मर्द्दिकाम् ॥ १ ॥

निःशेष-मौलि-धारिकां नृ-मुण्ड-पंक्ति-शोभिकाम् ।
नवीन-यौवनाख्यकां स्मरामि पाप-नाशिकाम् ॥ २ ॥

भवार्णवात्तु तारिकां भवेन सार्ध-खेलिकाम् ।
कुतर्क-मर्म-भञ्जिकां नमामि प्रौढ-रूपिकाम् ॥ ३ ॥

स्वरूप-रूप-कालिकां स्वयं स्वयम्भु-स्वात्मिकाम् ।
खगेश-राज-दण्डिकां अ-ई-कर-सुवीजकाम् ॥ ४ ॥

श्मशान-भूमि-शायिकां विशाल-भीनि अम्बिकाम् ।
तुषार-तुल्य-वाचिकां स-निम्न-तुङ्ग-नाभिकाम् ॥ ५ ॥

सुपट्ट-वस्त्र-साजिकां सु-किङ्किणी-विराजिकाम् ।
सुबुद्धि-बुद्धि-दायिकां सुरा सदा सु-पीयकाम् ॥ ६ ॥

स-क्लीं स-सौं स-सर्गकां सनातनेश चाम्बिकाम् ।
स-सृष्टि-पाल-नाशिकां प्रणौमि दीर्घ-केशिकाम् ॥ ७ ॥

सहस्र-मार्ग-पालिकां परा-परात्म-भव्यकाम् ।
सुचारु-चारु-वक्त्रकाम् शिवं ददातु भद्रिकाम् ॥ ८ ॥

इत्येतत्परमं गुह्यं पञ्च-चामर-संज्ञकम् ।
यो पठति च बालाग्रे तस्य सिद्धिर्भवेद् ध्रुवम् ॥ ९ ॥

यं यं चिन्तयते कामं तं तं प्राप्नोति साधकः ।
सिद्धिः कर-तले तस्य मृते मोक्षमवाप्नुयात् ॥ १० ॥

इति श्रीचन्द्र-द्वीपावतारे श्रीकण्ठनाथ-विरचितं
श्रीबालायाः पञ्च-चामर-स्तवम् ।

# श्री बाला मन्त्र-गर्भाष्टकम्

ऐंकार-रूपिणीं सत्यां ऐंकाराक्षर-मालिनीम् ।
ऐं-बीज-रूपिणीं देवीं बाला-देवीं नमाम्यहम् ॥ १ ॥

वाग्भवां वारुणी-पीतां वाचा-सिद्धि-प्रदां शिवाम् ।
बलि-प्रियां वरालाढ्यां वन्दे बालां शुभ-प्रदाम् ॥ २ ॥

लाक्षा-रस-निभां त्र्यक्षां ललज्जिह्वां भव-प्रियाम् ।
लम्ब-केशीं लोक-धात्रीं बालां द्रव्य-प्रदां भजे ॥ ३ ॥

यैकारस्थां यज्ञ-रूपां यूं-रूपां मन्त्र-रूपिणीम् ।
युधिष्ठिरां महा-बालां नमामि परमार्थदाम् ॥ ४ ॥

नमस्तेऽस्तु महा-बालां नमस्ते शङ्कर-प्रियाम् ।
नमस्तेऽस्तु गुणातीतां नमस्तेऽस्तु नमो नमः ॥ ५ ॥

महा-मन्त्रां मन्त्र-रूपां मोक्षदां मुक्त-केशिनीम् ।
मांसाशीं चन्द्र-मौलिं च स्मरामि सततं शिवाम् ॥ ६ ॥

स्वयम्भुवां स्व-धर्मस्थां स्वात्म-बोध-प्रकाशिकाम् ।
स्वर्णाभरण-दीप्ताङ्गां बालां ज्ञान-प्रदां भजे ॥ ७ ॥

हा-हा-हा-शब्द-निरतां हास्यां हास्य-प्रियां विभुम् ।
हुंकाराद्दैत्य-खण्डाख्यां श्रीबालां प्रणमाम्यहम् ॥ ८ ॥

इत्यष्टकं महा-पुण्यं बालायाः सिद्धि-दायकम् ।
ये पठन्ति सदा भक्त्या गच्छन्ति परमां गतिम् ।। ६ ।।

अश्वमेधादि-यज्ञानां फलं कोटि-गुणं लभेत् ।
सत्यं सत्यं पुनः सत्यं न देयं यस्य कस्यचित् ।। १० ।।

इति कुल-चूडा-मणि-तन्त्रे श्रीबालायाः मन्त्र-गर्भाष्टकम् ।

# श्री बाला पञ्चाङ्गम्

श्रीभैरव उवाच—

अधुना देवि वक्ष्यामि रहस्यं स्तोत्र-रूपकम् ।
येन साधक ईशानि साक्षात् श्रीभैरवायते ॥ १ ॥
अङ्गं त्रिपुर-सुन्दर्याः पञ्चमाख्यं महेश्वरि ।
पञ्चमी-रूपमानन्द - रूपमानन्द - वर्द्धनम् ॥ २ ॥
तत्त्वं श्रीत्रिपुरा-देव्याः श्यामायाश्च रहस्यकम् ।
स्तोत्र-राजं परा-देव्याः परमानन्द-कारणम् ॥ ३ ॥
स्तोत्रस्याऽस्य महादेवि ऋषिः प्रोक्तः सदाशिवः ।
पंक्तिश्छन्दः समाख्यातं देवता त्रिपुरा स्मृता ॥ ४ ॥
धर्मार्थ-काम-मोक्षार्थे विनियोगः प्रकीर्तितः ।

ध्यानम् —

सूर्य-कोटि-समानाभां चतुर्बाहुं त्रि-लोचनाम् ।
रक्त-पद्म-समासीनां रक्त-वस्त्राद्यलंकृताम् ॥
पुस्तकं चाक्ष-मालां च वरं चाभयमेव च ।
दधतीं च हृदम्भोजे श्री-बाला-त्रिपुरां भजे ॥

वाग्भवं भव-महार्णव-प्रोक्तं यो जपेन्मनसि मानवतीनाम् । काम-केलिषु भवेत्स साधकः कामदेव इव वैरि-बाधकः ॥ १ ॥

मदनं मदनाक्षरं जपेद् यो वदनाश्छादन-बद्ध-मौन-

मुद्रः । स भवेद्भव-सागरैक-पोतो भव-रूपो भुवन-त्रयेश्वरः स्यात् ॥ २ ॥

शक्ति-वीजमनघं सुधाकरं साधको यदि जपेद् हृदि भक्त्या । तस्य देव-वनिता-चरणाब्जौ रञ्जयन्ति मुकुटैर्मणि-युक्तैः ॥ ३ ॥

विन्दु-त्रिकोण - वसु-नाग-दलाढ्य - वेद-गेहान्विते परम-यन्त्र-वरे निषण्णाम् । ध्यायन्ति ये परिकरेण समन्वितां त्वां सम्प्राप्नुवन्ति तव देवि परं पदं तत् ॥ ४ ॥

इतीदं परमं गुह्यमङ्ग-भूतं हि पञ्चमम् ।
देवि त्रिपुर-सुन्दर्याः श्री-बालायाः स्तवोत्तमम् ॥ ५ ॥

रहस्यमेतदखिलं न कस्य कथितं मया ।
तव भक्त्या मयाख्यातं न प्रकाश्यं महेश्वरि ॥ ६ ॥

इदं पञ्चाङ्गमनिशं बालायाः सारमुत्तमम् ।
गोप्यं गुह्यतरं गुह्यं गोपनीयं प्रयत्नतः ॥ ७ ॥

इति श्रीरुद्रयामले श्रीबाला-पञ्चाङ्ग-स्तोत्रम् ।

# श्री बाला पञ्च-रत्न-स्तोत्रम्

ॐ आ-ई आनन्द-वल्लो अमृत-कर-तले आदि-शक्तिः परा-ई । मा-ई मायात्म-रूपी स्फटिक-मणि-मयी मामतङ्गी षडङ्गी ।। ज्ञानी ज्ञानात्म-रूपो दलित-परिमले नाद-ओंकार-मूर्त्तिर्भोगी योगासनस्था भुवन-वश-करी सुन्दरी ऐं नमस्ते ।। १ ।।

माला-मन्त्रो कटाक्षी मम हृदय-सुखी मत्त-भाव-प्रचण्डी । व्याला यज्ञोपवीता विकट-कटि-तटा वीर-शक्तिः प्रसन्ना ।। बाला बालेन्दु-मौलिर्मद-गज-गमना साक्षिका स्वस्ति-मन्त्री । कालो कङ्काल-रूपी कटि-कटि-कटि-ह्लीं-कारिणो क्लीं नमस्ते ।। २ ।।

मूलाधारा महात्मा हुत-वह-सलिला मूल-मन्त्रा त्रिनेत्रा । हारा केयूर-वल्ली अखिल-प्रिय-करो अम्बिका इ अ आ ई ।। वेदा वेदान्त-नादे विनत-घन-मुखो वीर-तन्त्री-प्रचारी । सारा संसार-वासे सकल-सुख-करी सुन्दरी सौः नमस्ते ।। ३ ।।

अध्यानी ध्यान-रूपी असुर-भय-करी आत्मना पाश-शोधी । प्रत्यक्षी पद्म-मूले प्रणत-बलकरी ब्रह्म-विष्णु-त्रि-रूपी ।। शुद्धात्मा शुद्ध-रूपा हिम-किरण-निभा

स्तोत्र-संक्षोभ-शक्तिः। सृष्टि-स्थित्यन्त-मूर्तिः त्रिपुर-हर-जयी सुन्दरी ऐं नमस्ते ॥ ४ ॥

ऐं क्लीं सौः ह्रीं ऐं क्लीं सकल-गुण-मयी सम्प्रदा-यात्म-रूपी। क्लीं ह्रीं श्रीं हिम-किरणयो-ज्योति-रूपी प्रभावी ॥ सौः क्लीं ऐं नवम-शक्ति प्रणव-हर-मिते विन्दु-नादात्म-कोटिम्। क्षां क्षीं क्षौं क्षुं क्षं कार-नादे सकल-गुण-मयी सुन्दरी ऐं नमस्ते ॥ ५ ॥

अधरे विन्दुमती सकलमखिलसौभाग्य-रूप-सम्पन्ना। विद्या-धरमखिलमखिलं जपति त्रैलोक्य-मोहिनी बाला ॥६॥

सिन्दूर-पूर-तन्वी सुन्दर-वर्ण-वर्ण्या बालारुणारुणि-तमम्बरमादधाना। बाला प्रवाल-मधुराधर-बिम्ब-वेशा श्रीसुन्दरी वसतु मे हृदये सदैव ॥७॥

इति श्री बाला पञ्चरत्न-स्तोत्रं सम्पूर्णम।

# श्री लघु स्तव-राजः

ऐन्द्रस्येव शरासनस्य दधती मध्ये ललाटम्प्रभां।
शौक्लीं कान्तिमनुष्णगोरिव शिरस्यातन्वती सर्वतः ॥
एषासौ त्रिपुरा हृदि द्युतिरिवोष्णांशोः सदाहस्थिता।
छिंद्यान्नः सहसा पदैस्त्रिभिरघं ज्योतिर्मयी वाङ्मयी ॥
या मात्रा त्रपुषी-लता-तनु-लसत्तन्तूत्थिति-स्पर्द्धिनी,
वाग्बीजे प्रथमे स्थिता तव सदा तां मन्महे ते वयम्।
शक्तिः कुण्डलिनीति विश्व-जनन-व्यापार-बद्धोद्यमा,
ज्ञात्वेत्थं न पुनः स्पृशन्ति जननी गर्भेऽर्भकत्वं नराः ॥
दृष्ट्वा सम्भ्रम-कारि वस्तु सहसा ऐ-ऐ इति व्याहृतं,
येनाकूत-वशादपीह वरदे विन्दुं विनाप्यक्षरम्।
तस्यापि ध्रुवमेव देवि तरसा जाते तवानुग्रहे,
वाचः सूक्ति-सुधा-रस-द्रव-मुचो निर्यान्ति वक्त्राम्बुजात् ॥
यन्नित्ये तव कामराजमपरं मन्त्राक्षरं निष्कलं,
तत्सारस्वतमित्यवैति विरलः कश्चिद् बुधश्चेद् भुवि।
आख्यानं प्रति-पर्व-सत्य-तपसो यत्कीर्त्तयन्तो द्विजाः,
प्रारम्भे प्रणवास्पद-प्रणयितां नीत्वोच्चरन्ति स्फुटम् ॥
यत्सद्यो वचसां प्रवृत्ति-करणे दृष्ट-प्रभावं बुधै—
स्तार्त्तीयं तदहं नमामि मनसा तद्-बीजमिन्दु-प्रभम्।
अस्त्वौर्वोपि सरस्वती-मनु-गतो जाड्याम्बु-विच्छित्तये,

गौः शब्दो गिरि वर्त्तते सुनियतं योगं विना सिद्धिदः ॥
एकैकं तव देवि बीजमनघं सव्यञ्जनाव्यञ्जनं,
कूटस्थं यदि वा पृथक्-क्रम-गतं यद्वा स्थितं व्युत्क्रमात् ।
यं यं काममपेक्ष्य येन विधिना केनापि वा चिन्तितं,
जप्तं वा सफलीकरोति तरसा तं तं समस्तं नृणाम् ॥
वामे पुस्तक-धारिणीमभयदां साक्ष-स्रजं दक्षिणे,
भक्तेभ्यो वर-दान-पेशल-करां कर्प्पूर-कुन्दोज्ज्वलाम् ।
उज्जृम्भाम्बुज-पत्र - कान्त-नयन-स्निग्ध-प्रभालोकिनीं,
ये त्वामम्ब न शीलयन्ति मनसा तेषां कवित्वं कुतः ॥
ये त्वां पाण्डुर-पुण्डरीक-पटल-स्पष्टाभिराम-प्रभाम्,
सिञ्चन्तीममृत-द्रवैरिव शिरो ध्यायन्ति मूर्ध्नि स्थिताम् ।
अश्रान्तं विकट-स्फुटाक्षर-पदा निर्याति वक्त्राम्बुजा—
त्तेषां भारति भारती सुर-सरित्कल्लोल-लोलोर्म्मिवत् ॥
ये सिन्दूर-पराग-पुञ्ज-पिहितां त्वत्तेजसा द्यामिमा—
मुर्व्वीं चापि विलीन-यावक-रस-प्रस्तार-मग्नामिव ।
पश्यन्ति क्षणमप्यनन्य-मनसस्तेषामनङ्ग-ज्वर—
क्लान्तास्त्रस्तकुरङ्ग-शावकदृशो वश्या भवन्ति स्त्रियः ॥
चञ्चत्काञ्चन-कुण्डलाङ्गद - धरामाबद्ध-काञ्ची - स्रजं,
ये त्वां चेतसि त्वद्गते क्षणमपि ध्यायन्ति कृत्वा स्थिरां ।
तेषां वेश्मसु विभ्रमादहरहः स्फारीभवन्त्यश्चिरं,
माद्यत्कुञ्जर-कर्ण-ताल-तरलाः स्थैर्य्यं भजन्ति श्रियः ॥

आर्भटया शशि-खण्ड-मण्डित-जटा-जूटां नृ-मुण्ड-स्रजं,
बन्धूक-प्रसवारुणाम्बर-धरां प्रेतासनाध्यासिनीम् ।
त्वां ध्यायन्ति चतुर्भुजां त्रिनयनामापीन-तुङ्ग-स्तनीं,
मध्ये निम्न-वलि-त्रयाङ्कित-तनुं त्वद्रूप-संवित्तये ॥
जातोऽप्यल्प-परिच्छदे क्षिति-भुजां सामान्य-मात्रे कुले,
निश्शेषावनि-चक्रवर्ति-पदवीं लब्ध्वा प्रतापोन्नतः ।
यद्विद्याधर-वृन्द-वन्दित-पदः श्रीवत्सराजोऽभव—
द्देवि त्वच्चरणाम्बुज-प्रणतिजः सोऽयं प्रसादोदयः ॥
चण्डि त्वच्चरणाम्बुजार्चन-कृते बिल्वीदलोल्लुण्ठनात्,
त्रुट्यत्कण्टक-कोटिभिः परिचयं येषां न जग्मुः कराः ।
ते दण्डांकुश-चक्र-चाप-कुलिश-श्रीवत्स-मत्स्याङ्कितै—
र्जायन्ते पृथिवी-भुजः कथमिवाम्भोज-प्रभैः पाणिभिः ॥
विप्राः क्षोणि-भुजो विशस्तदितरे क्षीराज्य-मध्वासवै—
स्त्वां देवि त्रिपुरे परापर-कलां सन्तर्प्य पूजा-विधौ ।
यां यां प्रार्थयते नरः स्थिर-धियां येषां त एव ध्रुवं,
तां तां सिद्धिमवाप्नुवन्ति तरसा विघ्नैरविघ्नीकृताः ॥
शब्दानां जननी त्वमत्र भुवने वाग्वादिनीत्युच्यसे,
त्वत्तः केशव-वासव-प्रभृतयोऽप्याविर्भवन्ति ध्रुवम् ।
लीयन्ते खलु यत्र कल्प-विरमे ब्रह्मादयस्तेऽप्यमी,
सा त्वं काचिदचिन्त्य-रूप-महिमा शक्तिः परा गीयसे ॥
देवानां त्रितयी त्रयी हुतभुजां शक्ति-त्रयं त्रिस्वरा—
स्त्रैलोक्यं त्रिपदी त्रिपुष्करमथो त्रिब्रह्म-वर्णास्त्रयः ।

यत्किञ्चिज्जगति त्रिधा नियमितं वस्तु त्रिवर्गादिकं,
तत्सर्व्वं त्रिपुरेति नाम भगवत्यन्वेति ते तत्त्वतः ॥
लक्ष्मीं राज-कुले जयां रण-मुखे क्षेमङ्करीमध्वनि,
क्रव्याद-द्विप-सर्प्प-भाजि शबरीं कान्तार-दुर्गे गिरौ ।
भूत-प्रेत-पिशाच-जृम्भक-भये स्मृत्वा महा-भैरवीं,
व्यामोहे त्रिपुरां तरन्ति विपदस्ताराञ्च तोय-प्लवे ॥
माया कुण्डलिनी क्रिया मधुमती काली कला-मालिनी,
मातङ्गी विजया जया भगवती देवी शिवा शाम्भवी ।
शक्तिः शङ्कर-वल्लभा त्रिनयना वाग्वादिनी भैरवी,
ह्रींकारी त्रिपुरा परापर-मयी माता कुमारीत्यसि ॥
आ-ई-पल्लवितैः परस्पर-युतैर्द्वि-त्रि-क्रमादक्षरैः,
काद्यैः क्षान्त-गतैः स्वरादिभिरथ क्षान्तैश्च तैः सस्वरैः ।
नामानि त्रिपुरे भवन्ति खलु यान्यत्यन्त-गुह्यानि ते,
तेभ्यो भैरव-पत्नि विंशति-सहस्रेभ्यः परेभ्यो नमः ॥
बोद्धव्या निपुणं बुधैः स्तुतिरियं कृत्वा मनस्तद्-गतं,
भारत्यास्त्रिपुरेत्यनन्य-मनसो यत्राद्य-वृत्ते स्फुटम् ।
एक-द्वि-त्रि-पद-क्रमेण कथितस्तत्पाद-संख्याक्षरै—
र्मन्त्रोद्धार-विधि-विशेष-सहितः सत्सम्प्रदायान्वितः ॥
सावद्यं निरवद्यमस्तु यदि वा किं वानया चिन्तया,
नूनं स्तोत्रमिदं पठिष्यति जनो यस्यास्ति भक्तिस्त्वयि ।
सञ्चिन्त्यापि लघुत्वमात्मनि दृढं सञ्जायमानं हठा—
त्त्वद्भक्त्या मुखरीकृतेन रचितं यस्मान्मयापि ध्रुवम् ॥

इति श्रीमल्लघ्वाचार्य्य-विरचितः श्रीलघुस्तव-राजः समाप्तः ।

# श्री बाला-सूक्तम्

ॐ नमः श्रीबालायै। रुद्रोऽहं विष्णुरहं ब्रह्माहं अहङ्कारश्च दिगीशोऽहं पर्वतोऽहं समुद्रोऽहं च भूतोऽहं भविष्योऽहं वर्तमानोऽहं च प्रातर्संध्याह्न-सायं-कालोऽहं प्रहरोऽहं च स्वर्ग-मर्त्य-पाताल-चतुर्दश-भुवोऽहं ब्रह्मा उश्च सोम-सूर्याग्नि-पृथिवी-अप-वाय्वग्नि-तेजाकाशोऽहं। वैकारिका अहङ्कारोऽहं तेजसाहङ्कारश्च भूताहङ्कारोऽहं महारण्यश्च कर्मेन्द्रिय-ज्ञानेन्द्रियोऽहं दोष-दूष्य-ज्ञानेन्द्रियार्थे कर्मेन्द्रियार्थोऽहं विकृत्योऽहं प्रकृत्योऽहं विकारश्च कर्मेन्द्रियार्थोऽहं अन्तःकरणोऽह हंसश्च। सुन्दरी-त्रिपुरा-बालाहं दश-महाविद्याश्च गायत्री सावित्री सरस्वती त्रि-सन्ध्याहं पद्माश्च द्वादश चतुर्दश त्रय-त्रिंशत् शत-सहस्रायुत लक्ष-कोटि चाम्नायोऽहं षडाम्नायश्च एकाक्षरादि अयुताक्षर मन्त्रोऽहं जगद्योनिश्च सृष्टि-स्थिति-प्रलयोऽहं सर्व-भूतांश्च चार्वाक् सिद्धान्त तन्त्र-मेलक चार्वाकाहंन्ता नेत्रक सर्वाकाश्चाहं श्रजिनोऽहं व्योमोऽहं कौलोऽहं शैवश्च। सौर-गाणपत्य-वैष्णव-शाक्तोऽहं नास्तिकश्च तपोऽहं योगोऽहं लय-विद्याश्च ब्राह्मण दूरापद-क्रम जटा

चतुर्दश-विद्याहं गङ्गादि-नद्योहं सागराश्च अनुष्टुभादि-छन्दोऽहं षट्-शास्त्रं च अहं नारदादि ऋषयः। त्रयस्त्रिशत् कोटि-देवताश्च। अहं सर्वं यद्-भूतं यच्च भाव्यं जगद्-भोक्तारिति ऐं नमो बालायै। च ये ध्यायितव्यं स अह सत्यं सत्यं ॐ।

इत्यथर्व-वेदोक्तं श्रीबाला-सूक्तम्।

# श्री बालोपनिषद्

ऐं नमः श्रीबालायै । श्रीबालोपनिषदं व्याख्यास्यामः, श्रृणु प्रिये ।।

चक्र-चक्रस्था, महात्मा, महा-गुह्या, गुह्य-तरा, श्रेष्ठातिश्रेष्ठा, भव्या, भव्य-तरा, त्रिगुणगा, गुणातीता, गुणस्वरूपा, गुङ्कार-मध्यस्था, रेचक-पूरक-कुम्भ-स्वरूपा, अष्टाङ्ग-रूपा चतुर्दश-भुवन-मालिनी, चतुर्दश-भुवनेश्वरी चत्वारि-वेद-वेदाङ्ग-पारगा, सांख्यासांख्य-स्वरूपा शान्ता शाक्त-प्रिया, शाक्त-धर्म-परायणा, सर्व-भद्रा, विभद्रा, सुभद्रा, भद्र-भद्रान्तर्गता, वीर-भद्रावतारिणी, शून्या, शून्य-तरा, शून्य-प्रभवा, शून्यालया, शून्य-ज्ञान-प्रदा, शून्यातीता, शूल-हस्ता, महा-सुन्दरी, सुरासुरारि-विध्वंसिनी, शूकरानना, सुभगा, शुभदा, सुशुभा, शस्त्रास्त्र-धारिणी, परा-प्रासाद-वामाङ्गा, परमेश्वरी, परापरा, परमात्मा, पापघ्ना, पञ्चेन्द्रियालया, पर-ब्रह्मावतारा, पद्म-हस्ता, पाञ्चजन्या, पुण्डरीकाक्षा, पशु-पाश-हारिणी, पशूप-पूज्या, पाखण्ड-ध्वंसिनी, पवनेशी, पवन-स्वरूपा, पद्यापद्य-मयी, पद्य-ज्ञान-प्रदात्री, पुस्त-हस्ता, पक्व-बिम्ब-फल-प्रभा, प्रेतासना, प्रजा-पाली, प्रपञ्च-हारिणी, पृथिवी-रूपा, पीताम्बरा, पिशाच-गण-सेविता, पितृ-

वनस्था, हंसः, स्वरूपा, परम-हंसी, ऐंकार-वीजा, वाग्भवस्था, वाग्भव-वीजाद्योनिनी, वाग्भवेशी, वाग्भव-वीज-मालिनी। यः एवं वेद स वेद-वित्॥

बालोपनिषदं यो पठति, यो शृणोति, तस्याघ-सर्वं नश्यति, चतुर्वर्ग-फलं प्राप्नोति, लय-ज्ञानं भवति, ज्योतिर्मये प्रलीयति, षट्-कर्म-विद्या सिद्धयति, मनोरथं पूरयति, सर्वारिष्टं नाशयति, धनं एधति, आयु-वृद्धि-र्भवति, निर्वाण-पदं गच्छति, महा-जनत्वं प्राप्नोति, सर्व-शास्त्रं ज्ञायति, बहु-तर-सिद्धिं नयति, डाकिन्यादि-सर्वं पलायति, ॐकारे प्रमीलति।

इत्यथर्व-वेदोक्तं बालोपनिषत् समाप्तम्।

# श्री बाला शान्ति-स्तोत्रम्

श्री भैरव उवाच —

जय देवि जगद्धात्रि जय पापौघ-हारिणि ।
जय दुःख-प्रशमनि शान्तिर्भव ममार्चने ॥ १ ॥
श्रीबाले परमेशानि जय कल्पान्त-कारिणि ।
जय सर्व-विपत्तिघ्ने शान्तिर्भव ममार्चने ॥ २ ॥
जय विन्दु-नाद-रूपे जय कल्याण-कारिणि ।
जय घोरे च शत्रुघ्ने शान्तिर्भव ममार्चने ॥ ३ ॥
मुण्ड-माले विशालाक्षि स्वर्ण-वर्णे चतुर्भुजे ।
महा-पद्म-वनान्तस्थे शान्तिर्भव ममार्चने ॥ ४ ॥
जगद्योनि महा-योनि निर्णयातीत-रूपिणि ।
परा-प्रासाद-गृहिणि शान्तिर्भव ममार्चने ॥ ५ ॥
इन्दु-चूड-द्युते चाक्ष-हस्ते परमेश्वरि ।
रुद्र-संस्थे महा-माये शान्तिर्भव ममार्चने ॥ ६ ॥
सूक्ष्मे स्थूले विश्व-रूपे जय सङ्कट-तारिणि ।
यज्ञ-रूपे जाप्य-रूपे शान्तिर्भव ममार्चने ॥ ७ ॥
दूती-प्रिये द्रव्य-प्रिये शिवे पश्वांकुश-प्रिये ।
भक्ति-भाव-प्रिये भद्रे शान्तिर्भव ममार्चने ॥ ८ ॥
भाव-प्रिये लास-प्रिये कारणानन्द-विग्रहे ।
श्मशानस्य देव-मूले शान्तिर्भव ममार्चने ॥ ९ ॥

ज्ञानाज्ञानात्मिके चाद्ये भीति-निर्मूलन-क्षमे ।
वीर-वन्द्ये सिद्धि-दात्रि शान्तिर्भव ममार्चने ॥ १० ॥
स्मर-चन्दन-सुप्रीते शोणितार्णव-संस्थिते ।
सर्व-सौख्य-प्रदे शुद्धे शान्तिर्भव ममार्चने ॥ ११ ॥
कापालिनि कलाधारे कोमलाङ्गि कुलेश्वरि ।
कुल-मार्ग-रते सिद्धे शान्तिर्भव ममार्चने ॥ १२ ॥
शान्ति-स्तोत्रं सुख-करं बल्यन्ते पठते शिवे ।
देव्याः शान्तिर्भवेत्तस्य न्यूनाधिक्यादि-कर्मणि ॥ १३ ॥
श्मशाने च त्रिधापाठात् महा-रोगो विनश्यति ।
पञ्चधा पठते भद्रे सर्व-दुःखं पलायते ॥ १४ ॥
मन्त्र-सिद्धि-कामनया दशावर्त्यं पठेद्यदि ।
मन्त्र-सिद्धिर्भवेत्तस्य नात्र कार्या विचारणा ॥ १५ ॥
पञ्चमस्य समायोगे पठते स्तोत्रमुत्तमम् ।
सिध्यन्ति सकला विद्या खेचर्यादिक-सत्वरम् ॥ १६ ॥
चन्द्र-सूर्योपरागे च पठेत् स्तोत्रमुत्तमम् ।
बाला सद्मनि सौख्येन बहु-कालं वसेत्ततः ॥ १७ ॥
सर्व-भद्रमवाप्नोति सर्वत्र विजयी भवेत् ।
तीर्थ-कोटि-गुणं चैव दान-कोटि-फलं तथा ॥ १८ ॥
लभते नात्र सन्देहो सत्यं सत्यं मयोदितम् ।

इति श्री चिन्तामणि-तन्त्रे श्रीबालायाः शान्ति-स्तोत्रम् ।

# श्री बाला-पटलम्

कैलास-शिखरासीनं भगवन्तमुमा-पतिम् ।
चन्द्रार्ध-मुकुटं देवं सोम-सूर्याग्नि-लोचनम् ॥ १ ॥
गज-चर्म-परीधानं विरूपाक्षं सुरार्चितम् ।
गण-गन्धर्व - यक्षेन्द्र-देवासुर - नमस्कृतम् ॥ २ ॥
विहसन्तं जपन्तं च पठन्तं च मुहुर्मुहुः ।
उत्थाय प्रणता भूत्वा चेदं पृच्छति भैरवी ॥ ३ ॥

श्रीभैरवी उवाच—

भगवन् ! करुणाम्भोधे ! सर्वागम-विशारद !
त्वत्-प्रसादान्मया सर्वाः श्रुता विद्याः सुरेश्वर ॥ ४ ।
इदानीं श्रोतुमिच्छामि बालां त्रिपुर-सुन्दरीम् ।
देयास्ति यदि मे देव ! वद विद्यां महेश्वर ॥ ५ ॥

श्री भैरव उवाच—

शृणु देवि ! प्रवक्ष्यामि पञ्चाङ्गं साधकेष्टदम् ।
पटलं पद्धतिं वर्म तथा नाम्नां सहस्रकम् ॥ ६ ॥
स्तव-राजं महादेवि ! शृणुष्वैकाग्र-मानसा ।
श्रीबाला परमेशानी भुक्ति-मुक्ति-प्रदायिनी ॥ ७ ॥
राज्यं देयं शिरो देयं गृहं लक्ष्मी-युतं तथा ।
सर्वं देयं महेशानि ! न देयमिदमुत्तमम् ॥ ८ ॥
अस्या विद्यायाः सदृशी विद्या नान्या कलौ युगे ।

श्रीबाला त्रिपुरा विद्या शीघ्रं सिद्धि-प्रदा स्मृता ।। ९ ।।
देया शिष्याय शान्ताय गुरु-भक्ति-रताय च ।
नाभक्ताय प्रदातव्या विद्येयं परमेश्वरि ।। १० ।।
मन्त्रोद्धारं तथा यन्त्रं प्रस्तारं ध्यानमेव च ।
प्रयोगान् सम्प्र वक्ष्यामि देव-देव्या महेश्वरि ।। ११ ।।
प्रथमं शृणु देवेशि ! मन्त्रोद्धारं फल-प्रदम् ।
गोपनीयं प्रयत्नेन येन सिद्धिः प्रजायते ।। १२ ।।
वाग्भवं कामराजञ्च शक्ति-मध्येऽभिधं न्यसेत् ।
नमोऽन्ते देवि! बालाया मन्त्रोऽयं चाष्ट-वर्णकः ।। १३ ।।
नापि विघ्नो न वाशौचो न वार-नियमस्तथा ।
स्वयं सिद्धो महादेवि ! मन्त्र-राजः कलौ युगे ।। १४ ।।
दक्षिणामूर्ति-पंक्त्यौ चमुनिश्छन्दः क्रमात् स्मृतम् ।
देवता त्रिपुरा बाला आद्यन्ते बीज-शक्तिके ।। १५ ।।
क्लीं कीलकं समादिष्टं धर्म-कामार्थ-मुक्तये ।
शिरसि वदने देवि ! हृदये गुह्य-देशके ।। १६ ।।
पादयोर्नाभि-कमले सर्वाङ्गे च तथा न्यसेत् ।
ऋष्यादिकं महादेवि! कुर्यान्न्यास-विकल्पनाम् ।। १७ ।।
कर-न्यासं षडङ्गं च बीजैः कुर्यान्महेश्वरि ।
अस्या ध्यानं प्रवक्ष्यामि साधकानां हित-प्रदम् ।। १८ ।।

रक्ताम्बरां चन्द्र-कलावतंसां
समुद्यदादित्य-निभां त्रिनेत्राम् ।
विद्याक्ष - मालाभय-दान-हस्तां

ध्यायामि बालामरुणाम्बुजस्थाम् ॥ १९ ॥

इति ध्यात्वा महादेवीं जपेन्मन्त्रं सुसिद्धिदम् ।
लक्ष-त्रयं पुरश्चर्या-विधौ साधक-सत्तमः ॥ २० ॥

अथ-वक्ष्यामि देवेशि ! यन्त्रोद्धारं सुदुर्लभम् ।
साधकस्य महादेव्या भुक्ति-मुक्ति-फल-प्रदम् ॥ २१ ॥

विन्दु-त्रिकोण - वसुकोणक - नागपत्र—
वृत्त-त्रयाञ्चित-मही-सदन-त्रयं च ।
बालादि-चक्रमिदमार्ति-हरं गिरीशे !
ब्रह्मेन्द्र-विष्णु-नमितं गदितं मया ते ॥ २२ ॥

एवं विलिखिते यन्त्रे पीठ-शक्तीः प्रपूजयेत् ।
इच्छा-ज्ञान-क्रियाश्चैव कामिनी काम-दायिनी ॥ २३ ॥

रती रति-प्रियानन्दा मनोन्मन्यपि वान्तिमा ।
पीठ-शक्तीरिमा इष्ट्वा पीठं तन्मनुना दिशेत् ॥ २४ ॥

व्योम-पर्वत-तार्तीयं सदाशिव-महा-पदम् ।
पीठ-पद्मासनायान्ते नमोऽन्तः पीठ-मन्त्रकः ॥ २५ ॥

षोडशार्णस्ततो मूर्तौ क्लिप्तायां मूल-मन्त्रतः ।
आवाह्य पूजयेद् देवीमुपचारैः पृथग्-विधैः ॥ २६ ॥

देवीमिष्ट्वा मध्य-योनौ त्रिकोणे मति-पूर्वकः ।
वाम-कोणे रतिं दक्षे प्रीतिमग्रे मनोभवाम् ॥ २७ ॥

योन्यां तु वह्नि-कोणादावङ्गानि परिपूजयेत् ।
मध्य-योन्यां बहिः पूर्व-दिक्षु चाग्रे स्मरानपि ॥ २८ ॥

बाण-देवीस्तद्वदेव शक्तीरष्टासु योनिषु ।
सुभगाख्या भगा पश्चात् तृतीया भग-सर्पिणी ॥ २९ ॥
भग-माला तथानङ्गाद्यानङ्ग-कुसुमा परा ।
अनङ्ग-मेखलानङ्ग-मदनेत्यष्ट-शक्तयः ॥ ३० ॥
पद्म-केसरगा ब्राह्मी-मुखाः पत्रेषु भैरवाः ।
दलाग्रेऽप्यष्ट-पीठानि काम-रूपाख्यमादिमम् ॥ ३१ ॥
मलयं कौलगिर्याख्यं चौहाराख्यं कुलान्तकम् ।
जालन्धरं तथौडचाणं देव-कूटमथाष्टमम् ॥ ३२ ॥
भू-गृहे च धरा-र्दिक्षु हेरुकं त्रिपुरान्तकं ।
वेतालमग्नि-जिह्वं च कालान्तक-कपालिनौ ॥ ३३ ॥
एक-पादं भीम-रूपं मलयं हाटकेश्वरम् ।
शक्राद्यानायुधैः सर्वैः स्व-स्व-दिक्षु समर्चयेत् ॥ ३४ ॥
तद्-बहिर्दिक्षु वटुकं योगिनीः क्षेत्रपालकम् ।
गणेशं विदिशासु वै वसून् सूर्यं शिवं तथा ॥ ३५ ॥
सर्व-भूतान् समभ्यर्च्य पूजयेदायुधांस्तथा ।
बालां मध्ये विभाव्यादौ कामेश्वराङ्क-मध्यगां ॥ ३६ ॥
मकारैः पञ्चभिः कौलः कौलाचार-परायणः ।
सम्पूजयेन्महादेवि ! साधको मन्त्र-साधकः ॥ ३७ ॥
विन्दौ गन्धाक्षतैः पुष्पैर्धूप-दीपादि-तर्पणैः ।
लयवाङ्गमिदमाख्यातं प्रयोगान् शृणु पार्वति ॥ ३८ ॥
यान् विधाय मनुः शीघ्रं सिद्धि-भाग् भवति ध्रुवम् ।
स्तम्भनं मोहनं चैव मारणाकर्षणे तथा ॥ ३९ ॥

वशीकारं तथोच्चाटं शान्तिकं पौष्टिकं तथा ।
एतत् साधनमाचक्षे सार-भूतं मनोः प्रिये ॥ ४० ॥
अदेयं देव्यभक्ताय गोप्यं गुह्यतमं पशोः ।
प्रतिपद् दिवसे देवि! स्नात्वा कृत्वाह्निकीं क्रियाम् ॥ ४१ ॥
मध्याह्ने निर्जनं गत्वा यथावदयुतावधि ।
होमो दशांशतः कार्यो घृत-पायस-बर्हकैः ॥ ४२ ॥
सन्तर्प्य देवताः सद्यः स्तम्भनं जायते ध्रुवम् ।
राज-सूर्येन्दु-वातानां दस्यु-वादि-मुखेषु च ॥ ४३ ॥
दर्शे सायं श्मशाने तु जपेदुलूक-विष्टरः ।
अयुतं तद्-दशांशेन होमं सर्पिस्सुरान्वितैः ॥ ४४ ॥
कण-केसर-पद्माक्षैर्मोहनं जगतां भवेत् ।
भूताख्ये वासरे देवि ! गत्वा प्रेतालयं निशि ॥ ४५ ॥
चिताग्रे संजपेद्-विद्यां वीरेन्द्रः षोडशाक्षरीम् ।
अयुतं च हुनेन्मन्त्री चिताग्नौ घृत-गुग्गुलम् ॥ ४६ ॥
चाण्डाल-केश-सहितं म्रियते रिपुरुत्कटः ।
अष्टम्यां शुक्ल-पक्षे तु जपेद् रहसि साधकः ॥ ४७ ॥
अयुतं मूल-विद्याया ध्यात्वा कान्तां मनोगताम् ।
होमो दशांशतः सर्पिर्लाक्षा-पुष्पवती-रजः ॥ ४८ ॥
करीर-पूल-गोधूमैः स्त्रीणामाकर्षणं भवेत् ।
नवम्यां साधकः स्नात्वा कृत्वा कर्माह्निकं प्रिये ॥ ४९ ॥
अयुतं घृत-मत्स्यण्ड-पद्म-मुक्तैण-रोमभिः ।
होमो विधेयो वरिशैर्वासवो दासतां व्रजेत् ॥ ५० ॥

चतुर्थ्यां कृष्ण-पक्षे तु जपेच्चन्द्रोदये शिवे ।
नदी-तीरे मनुं वीरोऽयुतं शीर्षासन-स्थितः । ५१ ॥
दशांशेन हुनेत्तत्र घृत-नीलोत्पल-त्वचः ।
लवङ्ग-मरिचाम्लादीन् रिपोरुच्चाटनं भवेत् ॥ ५२ ॥
पञ्चम्यां निशि देवेशि ! जपेदयुत-संख्यया ।
हुनेद् दशांशतः सर्पिर्मत्स्य-मत्स्यण्ड-खर्परान् ॥ ५३ ॥
महामय - महाभीति - महोपद्रव - शान्तये ।
महाष्टम्यां नरः स्नात्वा पीठे श्रेष्ठे दशाधकाम् ॥ ५४ ॥
वीरो दशाङ्क-साहस्रीं हुनेत्तत्र दशांशतः ।
घृत-खर्जूर-मृद्वीका-नागवल्ली-दल-स्रजः ॥ ५५ ॥
छाग-मांसं सरक्तं च महा-पुष्टिः प्रजायते ।
इदं रहस्यमाख्यातं सर्व-तत्व-निरूपणम् ॥ ५६ ॥
सर्वस्वं मम देवेशि ! रहस्यं गोपयेत् कलौ ।
सूर्यादि-वारेषु जपेर्दश-साहस्र-संख्यकैः ॥ ५७ ॥
सर्व-सिद्धिमवाप्नोति नात्र कार्या विचारणा ।
इत्येष पटलो दिव्यः स्नेहात् तव प्रकाशितः ॥ ५८ ॥
गोप्याद् गोप्यो गोप्य-तरो गोपनीयः स्व-योनि-वत् ॥ ५९ ॥

॥ इति श्री रुद्रयामले तन्त्रे भैरव-भैरवी-संवादे
श्री बाला त्रिपुर-सुन्दरी पटलः ॥ १ ॥

# श्री बाला त्रिशति स्तोत्रम्

अस्याः श्रीपरा-बाला-त्रिपुरा त्रिशति-स्तोत्र-मन्त्रस्य श्रीआनन्दभैरवो ऋषिः, श्रीपरा-विद्या-भगवती अनन्त-नायिका बाला-त्रिपुरा देवता, गायत्र्यनुष्टुप् छन्दः, ऐं बीजं, सौः शक्तिः, क्लीं उत्कीलनं, मायाऽऽव-रणं, चतुर्वर्गाप्तये प्रयोगः ।

मन्त्र-वर्णैं षडङ्गः ।

ध्यानम् –

समुद्यदादित्य-पराङ्ग-संख्यका—
माभान्वितां रक्त-प्रभां च दिव्याम्,
विद्याक्ष-माले त्वभयं वरं च ।
विश्वेषु दात्रीं परमाम्बुजां भजे ॥

त्रिशति स्तोत्रम्—

बाला बलाऽबला माला श्रीबाला बाल-रूपिणी ।
बालिका शालिनी शाला तारिणी तरणेश्वरी ॥ १ ॥
श्रीश्यामा गौरी सुप्रीता प्रीता पीता परात्परा ।
शैलिनी शैलजा माता सुकेता सोम-धारिणी ॥ २ ॥
सोमदा पुष्पिणी पुष्पा मकरन्दा परागया ।
पोषिणी विधिदा विद्या महाविद्या पराङ्कजा ॥ ३ ॥

पूर्णा दशमयी माया दशा विद्या महोक्षजा ।
दशा दशमयी प्रज्ञाऽमोघाऽमोघ-शासना ॥ ४ ॥
पुष्पिणी प्रथमा भद्रा विद्याक्षाऽक्ष-धारिणी ।
त्र्यक्षाक्षा पुष्प-पक्षाऽक्षा मीनाक्षा काम-सुन्दरी ॥ ५ ॥
कामाक्षा मदनाक्षा श्रीः श्रीविद्या षोडशी सती ।
विद्या पञ्चदशी पञ्चा पञ्चानन-प्रिया प्रभा ॥ ६ ॥
रक्त-वस्त्र-धरा रक्ता रक्ताभा रक्त-मालिनी ।
रक्तासन-समासीना रजा सत्वा तमाश्रया ॥ ७ ॥
गुण-त्रयासना दिव्या सर्वाभरण-भूषिता ।
सर्वा सर्वंगा खर्वाऽर्वा च सर्व-प्रदायिनी ॥ ८ ॥
बलि-प्रीता बलिस्स्फीता बल्यर्चन-वधौ स्मिता ।
सर्व-काम-प्रदा मुक्ता मुक्तेशी मोक्ष-दायिनी ॥ ९ ॥
पर्ण-गेहा प्रिय-प्रीता पर्ण-गेह-निवासिनी ।
मणि-गेह-प्रदा मण्या कौस्तुभा दिव्य-कारिका ॥ १० ॥
चिन्तामणिश्चिन्तनीया चिता चिन्ता परापरा ।
मृत्युञ्जय-सखी रामा रमा रज्जुर्र-बीजपा ॥ ११ ॥
राजेश्वरी महामाया महाकर्त्री कृतार्थदा ।
कृतार्था कण्ठजा विद्या कमठा केलि कालिका ॥ १२ ॥
केलिर्केलि-मयी कुल्ला कुरुकुल्ला कलामयी ।
कलान्ताऽन्तर्कला प्रीता पूर्णेशी पारद-प्रभा ॥ १३ ॥
पालिनी पोषिणी पूर्वा पूर्वजा पूर्व-पूर्वजा ।
पङ्क्तेशी पञ्चमाशा साऽऽनन्दैक-प्रदा परा ॥ १४ ॥

हंसा हंसेश्वरो मुग्धा मोहदा मोह-लक्षणा ।
मोहेश्वरी महामाया मल्लिकेश-प्रपूजिता ॥ १५ ॥
मल्लिकार्जुन-मोहेशी मल्लिकार्जुन-सेविता ।
मल्लिकार्जुन-सम्प्रोता सर्वान्ता श्रीश्रिय-प्रदा ॥ १६ ॥
देव-राज-समाराध्या सर्व-देव-प्रियङ्करी ।
स्पन्दजाद्या महाद्याद्या पूर्ण-ब्रह्मेश्वरीश्वरी ॥ १७ ॥
शिवाराध्या चेश्वरेशी सा सर्वाङ्गा सङ्गमेश्वरी ।
सङ्गमा सङ्गजा सारा सङ्गमेश्वर-सेविता ॥ १८ ॥
सागरा सार-सोमेशाऽमृता पीयूष-पानपा ।
शान्ता च घूर्णिताऽघोरा विह्वला मदया मदा ॥ १९ ॥
महानन्दा विशालाक्षी पूर्णानन्द-प्रदायिनी ।
श्रीकृष्णा कृष्ण चावेशी कृष्ण-मुक्त-कराऽमला ॥ २० ॥
पक्षानन्द-प्रदा पक्षा श्वेत-कृष्णाऽक्षराक्षरा ।
वर्ण-बीजाक्षरी माला विश्व-बीजा महेश्वरी ॥ २१ ॥
ऋद्धि-सिद्धि-मयी श्रद्धा ऋद्धि-सिद्धि-सनातनी ।
पूर्णा परेश्वरी सिद्धा सिद्धि-माता स्वरेश्वरी ॥ २२ ॥
सनकानन्द-सन्देशा सा सनन्दात्म-काशदा ।
सनातना खण्डदा सिद्धिः सनत्साधन-साधना ॥ २३ ॥
श्रीशिवा शङ्कराऽशेषा वृद्धाऽशेषापि कन्यका ।
शून्या शून्याति-रोमाभा चाशून्या शून्य-सुन्दरी ॥ २४ ॥
शून्याऽपि सा पराभासा भावना भास-भासिनी ।

अरूपा रूपयाऽनन्ताऽपारा सा रूप-सुन्दरी ॥ २५ ॥
पूर्णा चापरा-विद्या परा-पूर्णा परेश्वरी ।
काला काल-मयी सिद्धा कालो कर्ण-वर-प्रदा ॥ २६ ॥
आशा संक्षोभिणी माया षोडशी मोहिनी महा ।
श्रीनाथोपासिता प्रज्ञा श्रीशिवोपासिता क्रिया ॥ २७ ॥
त्रिमयी पौरुषी माया श्रीदुर्गा धारिणी कला ।
माता च मायिता भावाऽलङ्कारा भोगदा प्रिया ॥ २८ ॥
पाणेशी जीवना मृत्युर्यमेशी मोक्षदा शिवा ।
कुमारी कुलजा कल्या कृष्ण-कल्याण-कारिणी ॥ २९ ॥
अञ्जना अञ्जनेशी च अञ्जनेश-प्रियङ्करी ।
मयूरा मुरली-पूरा पक्ष-प्रीता सपक्षिणी ॥ ३० ॥
उन्मनी चोन्मनी प्रीता सोन्मनी परदा परा ।
सौम्येशी च सदा शान्ता शान्त्यनन्ता करालिनी ॥ ३१ ॥
विश्वाम्बा विश्वजा पुण्या पुण्य-क्षेत्रा महा-यशा ।
महा-पुण्य-करी कृत्या कर्महा कर्मदा मुदा ॥ ३२ ॥
अनिलाऽनल-रूपा सा जला जालाऽधरा धरा ।
शर्मदा नर्मदा नित्या नित्य-रूपा महा-प्रभा ॥ ३३ ॥
अर्बुदा चार्चन-परा अर्चनानन्द-वर्द्धिनी ।
विश्वार्चन-पराऽलिङ्गा लिङ्ग-ज्ञानाङ्ग-चार्चिका ॥ ३४ ॥
वेदिनी वेददा विद्या सर्व-ज्ञान-प्रकल्पिनी ।
जालाकर्षिणी विश्वेशी विश्व-कर्षिणी तोषिणी ॥ ३५ ॥

तोषिणी पोषिणी कोषा कोषदा कोष-रक्षिणी ।
विद्या कोष-मयी कोषा कर्षिणी कोष-वर्द्धिनी ॥ ३६ ॥
संवेदा विश्व-विज्ञाना संवित्पर-प्रदाऽनघा ।
कलि-कल्मषहा ज्ञाना सुन्दरी सुन्दरेश्वरी ॥ ३७ ॥
बलि-बुद्धि-करी प्रज्ञा बलि-बुद्धि-विवर्द्धिनी ।
बल्याश्रय-प्रदाऽमोघा बलि-प्रज्ञा-प्रचोदिनी ॥ ३८ ॥
ऐं क्लीं सौः मन्त्र-वर्णा सा मन्त्र-माताऽमृता सती ।
यन्त्रा यन्त्री महा-तन्त्रा तन्त्री मन्त्र-फल-प्रदा ॥ ३९ ॥
सर्व-मन्त्रा-स्वरूपा सा यन्त्रेषी यन्त्र-नायिका ।
सोहं हंसः-स्वरूपा सा अन्तर्विज्ञानदा प्रभा ॥ ४० ॥
श्रीं ह्रीं क्रीं भासना शक्तिरलङ्कारात्मगा प्रगा ।
महा-विद्या परा-पूर्णा दशा-रूपा दशेश्वरी ॥ ४१ ॥
क-ए-इ-ल महा-माया ह-स-क-ह-लात्म-नालिका ।
सकला सा परा-माया एक-तन्त्रात्म-नायिका ॥ ४२ ॥
रसा रस-मयी बाला रस-पूर्णा रसेश्वरा ।
रसेश्वर-परा पूर्णा रहस्यात्मा महेश्वरी ॥ ४३ ॥
अलक्ष्या लक्ष्यदा लक्ष्या अलक्ष्यानन्ददा शुभा ।
निरञ्जना निरासीना नक्षत्रा मण्डलाधिका ॥ ४४ ॥
विश्व-मण्डल-सङ्काशा काशदा काश-नायिका ।
सर्व-विश्वेश्वरी मुक्ता मुक्ता-हार-प्रिया स्वधा ॥ ४५ ॥

इत्येत् परमं गुह्यं त्रिशति-स्तोत्रमुत्तमम् ।
बाला-त्रिपुर-सुन्दर्याः मुक्ति-मुक्ति-प्रदं नृणाम् ।।
यः पठेत् सततं नित्यं पूजा-काले समाहितः ।
प्राप्नोति परमां सिद्धिं सत्यं सत्यं न संशयः ।।

।। इति श्री बाला त्रिपुरा त्रिशति-स्तोत्रं सम्पूर्णम् ।।

# श्री बालाष्टकम्

जयन्ति विघ्नौघ-तमघ्न-मानवः,
सुरासुराधीश-किरीट-भूषणाः ।
श्री शुक्ल-रक्षा-व्रत-तत्पराः मुदा,
बाला-पद-द्वन्द्व-विशाल-रेणवः ॥

पुनीते लाक्षाक्ते ह्यरुण-कमलोर्ध्वासन-वृते ।
ध्वजैः पद्मैर्दिव्यैर्यव-कुसुम-मालाङ्क-सहिते ॥
सुरेशैर्लोकेशैर्नृप-ऋषि-मुनीन्द्रैः सुनमिते ।
पदाब्जे बालायाः मम मन-मलिन्दो विहरतु ॥ १ ॥

समस्तं तन्त्रं नो स्तवनमपि मन्त्र सुविमलम् ।
न यन्त्रं पूजाञ्च तव जननि जाने सुविधिना ॥
मदीयोऽयं बालः परम-करुणा-पूर्ण-हृदये ।
पदाब्जे बालायाः मम मन-मलिन्दो विहरतु ॥ २ ॥

स्व-भक्तेभ्यो सद्यो विविध-फल-दानैक-निपुणे ।
जगत्पूज्ये सेव्ये हरि-हर-महेन्द्र-प्रभृतिभिः ॥
रणन्मञ्जीरेऽस्मिन् विविध-मणि-मुक्तावलि-युते ।
पदाब्जे बालायाः मम मन-मलिन्दो विहरतु ॥ ३ ॥

ददाने दीनेभ्यो बहुल-धन-सम्भार-भरणम् ।
रती-रम्भेन्द्राणी-सुर-युवतिभिर्मानस-कृते ॥

नखैरर्धाकारैर्विधु-विमलभाभिर्विलसिते ।
पदाब्जे बालायाः मम मन-मलिन्दो विहरतु ।। ४ ।।
अमुष्मिन् वंशे मे जननि बहु-बाला-प्रभृतयः ।
कवीन्द्रो विद्वांसो नृप-वर-किरीटार्चित-पदाः ।।
बभूवुस्तेषाञ्च सकल-विधि-रक्षा-व्रत-परे ।
पदाब्जे बालायाः मम मन-मलिन्दो विहरतु ।। ५ ।।
समन्तात् पापानां निज-जननि पारं न गतवान् ।
स्व-स्वार्थोन्मत्तोऽहं तव विमल-पूजा-विरहितः ।।
समस्तं ज्ञात्वेत्थं तदपि करुणा-पालन-करे ।
पदाब्जे बालायाः मम मन-मलिन्दो-विहरतु ।। ६ ।।
सदा दीनं मातर्विविध-परितापैः परिवृतम् ।
कुतर्केष्वभ्यस्तं ह्यु दर-भरणोपाय विधुरम् ।।
न सक्तं सेवायां तदपि दधाने स्वशरणे ।
पदाब्जे बालायाः मम मन-मलिन्दो विहरतु ।। ७ ।।
न याचे साम्राज्यं हरि-हर-पदन्नापि सकलम् ।
न वैराग्यं मोक्षं विपुल-धन-धान्यौघममलम् ।।
परं याचे मातर्निज सकल-दुःखैक-दलने ।
पदाब्जे बालायाः मम मन-मलिन्दो विहरतु ।। ८ ।।
बालाष्टकं पठति यः प्रयतस्त्रिकालम् ।
बद्रीप्रसाद-तनयेन कृतं विशालम् ।।
तस्य गृहे धन-सुतादि-समस्तकामान् ।

ऐश्वर्य्य-भाग-विविधान्   प्रददाति बाला ॥ १ ॥

रावतपुरे   भासित-दिव्य-मूर्तिम्   ।

स्व-पूर्वजाराधित-पाद-पङ्कजाम्   ॥

रक्तारविन्दासन-संस्थितां   ताम्   ।

ध्यायामि बालां   त्रिपुराख्य-सुन्दरीम् ॥ २ ॥

बदरी-सूनुना   स्वेष्टम्,   सधारी-सुकुलेन च ।

कृतं बालाष्टकं दिव्यं   बाला-चरणयोर्ऽर्पितम् ॥

॥ इति   श्रीबाला-चरणाष्टकम ॥

# श्री बाला महिम्न स्तोत्रम्

प्रबद्धोऽयं वत्सो जननि ! तव नागेन्द्र-चरणे ।
स एवाऽयं नागो व्रजति तरसा कण्टक-वने ॥
व्रणास्तैः सम्भूता रुधिर-वमना दंश-वशगा ।
इमां सूनोर्दृष्ट्वा किमु हरसि न ग्रन्थिमभितः ॥ १

ज्वलन्तं सम्पश्यन् जनक-जननी दृष्टि-विषये ।
हुताशं क्रीड़ायै व्यवहरति बालो यदि भवे ॥
दया-भावाऽशोधी हुत-भुगशित स प्रलपति ।
तदाशक्तेर्दोषं जननि ! मनुजः कस्य कथयेत् ॥ २

ततः क्रीड़ाऽऽसक्तः प्रथम-वयसि ज्ञान-विरतो ।
युवत्वे सम्प्राप्ते युवति-विषयाऽऽसक्त-हृदयः ॥
सुतानामुत्पत्तिं भजति मनसा वृत्ति-बलतः ।
प्रपञ्चोऽयं नित्यस्तव जननि ! दुर्वार उदितः ॥ ३

क्व कर्मत्व-ज्ञानं स्पृशति जननि ! प्रागवसरे ।
समास्नाते मूत्रैरधिगत-पुरीषोत्सव-गृहे ॥
महत्वे तेनाऽऽसे कथमिह सुकर्माचरणवान् ।
विकाराप्ते त्वस्मिन् हरति नहिं स प्राप्तविभवम् ॥ ४

प्रसूतीनामेको यदपि सुधियां नीच-पथगः ।
भवेत् सूनुस्तस्य त्यजति जनकः स्नेहमतुलम् ॥

प्रसू-प्रीतेस्तेषु कुमति-सुमतिष्वेव समता ।
यतस्तेषां साम्यं जनन-समयस्यापि सदृशम् ॥ ५

जरायौ मे जाता नग-पति-सुतेऽनेक-विधिना ।
निवासास्त्वत्पादाभ्यसन-विधि-शून्येन फलिताः ॥
तदुत्पीडा-ग्रस्तः प्रलपित-मनाः पङ्कज-पदं ।
त्वदीयं ध्यायामि क्षिति-निरत-चित्तस्य विरतेः ॥ ६

महत्वं तेऽपर्णे ! चरण-नलिनोर्देव-गुरुभि-
रसाध्यं सर्वज्ञैरपि निगदितं मातरविदः ।
मनीषा चैतस्य कथमनुचरेन्मोक्ष-पदवीं ।
त्वदङ्घ्रि-द्वन्द्वस्य स्तुतिममर-वाक्याश्रितवतोम् ॥ ७

निषिध्यादौ रूपं तव जननि ! वेदान्त-निरताः ।
परे प्राहुर्मातर्भव-विधि-निदानं तव वपुः ॥
विधाता भूतेशः खगपति-पतिश्चापि विमले ।
भवत्याः सञ्जाता नगपति-सुते! गायति परः ॥ ८

इदानीं त्वां स्तोतुं कथमनुभवेयं त्रिनयने,
विभीतात्मा-वृत्तौ बहु-विध-रुचि-ग्रस्त-हृदये ।
स्थिता बुद्ध्याकारा त्वमसि मनुजानां मनसि वै,
अतो निन्द्य-स्तोत्रे तव जननि! यत्नोऽयमपि मे ॥ ९

यदीयैक्यस्यैवाऽप्यनुसरणमिच्छन्ति बहवो,
विनिन्द्यानुग्राह्यं नगपति-सुते ! तस्य सहसा ।
कथं ते तद्रूपा इति मम मनोऽनिश्चित-परं,
यतोऽद्वैतं प्राहुः श्रुति-विहित-मार्गं श्रुति-विदः ॥ १०

विधाता ताक्ष्येंशो विषधर-पतिः काल-कलनः,
त्रिकाल-ज्ञातारः कमल-जनि-पुत्राश्च मधवा ।
स्थिताश्चान्ये देवाः सदसि खलु दक्षस्य बहवो,
विधातुः सत्रस्य क्षिति-धर-सुते ! तस्य सहसा ॥ ११
शिरश्छेदो जातस्तदपि शिव-शूलेन महता,
तिरस्कारस्यापि प्रतिहत-गिरा किन्तु लभते ।
प्रलम्बित्वात् सत्यामृतमिति पद-प्राप्ति-विषयां,
किमन्यूनां मत्वा सकल-भुवनोदार-रचनाम् ॥ १२
त्वदीयं पादाब्जं हृदय-कमले यस्य रमते ।
स एवं ते रूपं मुनिवर-चय-ध्यान-विषयम् ॥
निदानं दीक्षाया विधि-हरि-शिवानाञ्च गिरिजे!
उपेतं तल्लिङ्गैरनुवदति ते भक्ति-निरतः ॥ १३
सदा सेव्यं मातश्चरण-युगलं ब्रह्म-पथगै—
स्त्वदीयं सेवेऽहं रचित-मणिपीठेऽर्पित-तलम् ॥
नख-ज्योत्स्नाऽऽक्रान्ते सुर-पति-किरीटानुकरणे ।
भवाऽऽवृत्ति-ध्वंसं प्रणमित-तरं देव-गुरुभिः ॥ १४
चिदानन्दाकारे ! तव चरण-सेवाऽमृत-रसं ।
पुरश्चारी धर्मः पिवति खलु लोकेऽपि निरतः ॥
समर्थो देवेन्द्राऽऽस्पद-गमन-दाने दुरितहा ।
भवत्या निर्दिष्टो भ्रमर-समया भ्रू-लतिकया ॥ १५
विभूतिं त्वद्भक्तस्तव चरण-पङ्करुह-भवां ।
दुरापा मन्यैश्च स्वपन-वसु-गर्भां त्रि-नयने !

सुरक्ष्यां विश्वेशैः सुर-हृदय-तात्पाप-नुदयां ।
विभुञ्जानः कामं भवति मनुजैर्वन्द्य-चरणः ॥ १६

भ्रमन्तालि-द्वन्द्वाऽमृत-जनि-मुखीनां तव जनः;
सुधा-वीची-वाचां मृग-पति-कटीनां प्रतिदिनम् ।
घन-प्रायाकारस्तन-युग-धराणमविकलं ,
विलासी नारीणां करि-वर-गतीनां भवति सः ॥ १७

भवानि ! त्वत्तूर्यास्पदमखिल-वेदैर्विरचितं ,
तदुद्भूतैरुद्धं ध्वनिभिरति-सूक्ष्मैश्च नितराम् ।
अनेकत्वैकत्वानवगम-तिरस्कार-विषयं ,
विशुद्धानन्दार्णे अभिनिवेशति ध्यान-निरतः ॥ १८

मुकुन्द-ब्रह्मेन्द्र-त्रिनयन-सुराणां फलवतां ,
भवत्पूजा मातस्त्रिगुण-विहिता स्वात्म-सदृशी ।
त्वदुद्देश्ये यश्चेद्भवति ननु सत्व-प्रसविका—
मतस्त्वां कल्याणीं प्रणिगदति कश्चित्तव जनः ॥ १६

विहार-प्रासादस्तव जननि ! पङ्केरुह-पदोः ,
परिच्छेत्तुं शक्यो विधि-मुर-रिपुभ्यां नहि यतः ।
अतस्त्वां सुस्नातां त्रिगुण-मलतोऽदृष्ट-वपुषी ,
शिवेति त्वत्सेवी भव-जलधि-तीर्णः शिव-वपुः ॥ २०

त्रयो ब्रह्माद्यास्ते कथमपि गता ध्वस्त-पशवः ,
स्मरन्तस्ते वाणीं सुर-पद-सुगुप्तां तव पदम् ।
ततो द्वार-स्थायी नव-शिशुतरस्त्वद्-बल-जयी ,
अभूत् प्राहुर्दुर्गे स्व-जन-सुलभां त्वां मुनि-वराः ॥ २१

समुद्राशी दृक्ते हुतभुगभिधोऽनन्त-महिमा
चतुर्लक्षं क्रोशे तमुपरि विभाति ग्रह-पतिः ।
ततश्चोर्ध्वे चन्द्रोऽमित-गमन-शीलो द्वि-गुणिते
तृतीयांशस्येयं तव जननि ! मौलेश्च गुरुता ।। २२

अहो ब्रह्मादीनां वयस उदयास्तौ तव दृशौ
कटाक्ष-प्रक्षेपोद्गमन-पवनोद्भूत-रथिनौ ।
विरुद्धांशु-कामं सकल-भुवनाधार-वपुषो
समुन्नेया दिव्या स्थित-महिम-देहा तव जनैः ।।२३

विवेकस्ते कोऽयं गिरि-पति-सुते ! पाप-मनसां
यम-त्रास-त्राणा भवसि बलतस्तेभ्य इति च ।
अनिच्छद् भूयः श्रेयः सपदि ददसि प्रार्थित इव
किमन्यत्ते शीलं लघु-जपन-मात्र-प्रमुदितम् ।।२४

भवत्यङ्घ्रि-द्वन्द्वोद्वहन-गुरु-भारादवनतः
मुकुन्दोऽपि श्रान्तो भजति भुजगाधीश-शयनम् ।
यदुद्देश-क्लिष्टो भवति खलु यस्तस्य चरणं
किमाश्चर्यं ह्येतत् भजति गुरुतेयं समुचिता ।।२५

लये ब्रह्मादीनां त्वयि जल-तरीं केशव-मयीं
गृहीत्वा पाणिभ्यां विचरसि महा-सिन्धु-विवरे ।
जगद्बीजोत्पत्ति-प्रभव-विवरां त्वां सुर-गणाः
अतः प्रेतारूढा हरि-हृदय-वासेत्यपि जगुः ।।२६

त्वया पूर्वं रम्भासुर-सुत-शिवाऽधोक्ष जगतिः
कृतो विष्णुर्बध्वा हत इति विचित्रा तव गतिः ।

यम-त्रासो धाता निगम-वदनः काम-वशगः
अहं वश्या कस्येत्यपि तव मतं ज्ञातमधुना ॥ २७

विधेयाधीनैव त्वमसि जनक-प्राङ्गण-महो
प्रलये प्रवृत्ता स्मर-हर-धनुः स्वेन भुजतः
समुत्थायोत्कृष्टं भजन-फल-संशिन्युपगता
गृहे यस्य त्वं वै अवतरसि किं दुर्लभतरम् ॥ २८

स्वकीयौदार्यत्वादभिलषित - मोक्षादि - फलदा
त्वदङ्गस्यैवांशु रविरपि तमिस्रां प्रलयते ।
विभर्ता लोकानां हरिरपि ययाचे हि जनकं
अतस्त्वान्ते भक्तिर्बहु-फलवती किन्न भवति ॥ २९

अधो नागेशस्त्वं क्षिति-पतिरपि त्वं सुर-पतिः
यमस्त्वं पाशी त्वं विधिरसि हरिस्त्वं शिव इति ।
विभिन्नां त्वय्येवं विदधतु विधेयो गिरि-सुते
प्रमाकारां वाणीं सकल-भुवन-त्राण-फलिताम् ॥ ३०

भवानी सर्वेशा निगम-जननी सिन्धु-तनया
शची दुर्गा वाणी सकल-भुवनोत्कृष्ट-वपुषी ।
भवोत्पत्तौ वीजा सकल-सुर-रूपा च विशदा
तनीयांसी माता इति पद-विधां नौमि भवतीम् ॥ ३१

त्वन्मौलि-वास-रवि-चन्द्र-कला प्रफुल्लं
पुष्पं सरोवर-समे च मुखे मदीये ।

भक्तिस्तवैव वरदे ! तव पाद-पद्मे
आधारदिदं भवतु भक्त जनाश्रया सा ॥ ३२

॥ इति श्रीकालिदास-सुत दशमी-गर्भज योगानन्द-कृतं वाला-त्रिपुर-सुन्दरी महिम्न-स्तोत्रं ॥

# श्री त्रिपुरा-बाला पटलम्

श्री पार्वती उवाच—

देव-देव ! महेशान ! यद्यहं प्रेयसी तव ।
पटलं श्रीबाला-देव्या मुदा तन्मे प्रकाशय ॥

श्री भैरव उवाच—

अथातः सम्प्रवक्ष्यामि देवि ! गुह्य-तमोत्तमम् ।
येन विज्ञान-मात्रेण साधको भैरवो भवेत् ॥
मन्त्रोद्धारं प्रवक्ष्यामि यथावत् शृणु सादरम् ।
वाग्भवं प्रथमं प्रोक्तं द्वितीयं कामराजकम् ।
तृतीयं शक्ति-वीजं स्यात् मन्त्रोद्धारः प्रकीर्तितः ॥

वाग्भवं=ऐं, कामराज=क्लीं, शक्ति-वीज=सौः

न तिथिर्न च नक्षत्रं नाङ्ग-न्यासं च मन्त्रिणाम् ।
न वार-दोषो न विघ्नो न शौचोऽपि विधीयते ॥
यस्य तिष्ठति मन्त्रोऽयं तस्य सिद्धिर्न दूरतः ।
ध्यानं तस्याः प्रवक्ष्यामि यथावच्छृणु पार्वति ॥

ध्यानम्

मुक्ता-शेखर-कुण्डलाङ्गद-मणिग्रैवेय-हारोर्मिकाम् ।
विद्योतिर्वलयादि-कङ्कण-वटी सूत्रां स्फुरन्नूपुरम् ॥
माणिक्योदर-बन्ध-कञ्चुक-धरानिन्दोः कलां विभ्रतीम् ।
पाशं सांकुश-पुस्तकाक्ष-वलया दक्षोर्ध्व-बाह्वादितः ॥

पूर्णेन्दु-प्रतिम-प्रसन्न-वदनां नेत्र-त्रयोद्भासिताम् ।
इन्दु-क्षीर-वलक्ष-गात्र-विलसन्माल्यानुलेपनाम्बराम् ॥
मूलाधार-समुद्‌गता-भगवतीं हृत्पङ्कजे चिन्तयेत् ।

यन्त्रोद्धारः

यन्त्रोद्धारं प्रवक्ष्यामि शृणु देवि ! महा-फलम् ।
नव-योनिं समालिख्य पुनर्वृत्तं समालिखेत् ॥
तल्लग्नमष्ट-पत्रं तु चतुरस्रं लिखेच्छिवे ।
चतुर्द्वार-विशोभाढ्यं सर्वानन्द-करं सदा ॥
विलिख्य पूजयेद् यन्त्रं हेम-रूप्यादि-पट्टके ।
भूमौ चन्दन-पीठेषु कुंकुमागरु-चन्दनैः ॥
सिन्दूर-रजसा वापि कस्तूरी गुग्गुलादिभिः ।
सुवर्ण-रत्न-लेखिन्या कल्पितं मृण्मयेऽथवा ॥
विलिख्य यन्त्रं देवेशि ! बालायाः सर्व-कामदम् ।

पुरश्चर्या-विधिः

पुरश्चर्या विधातव्या साधकेनास्य सिद्धये ।
वर्ण-लक्षं जपेन्मन्त्रं तदर्द्धं वा महेश्वरि ॥
एक-लक्ष-विधं कुर्यान्नातो न्यूनं कदाचन ।
जीव-हीनो यथा देही सर्व-कर्मसु न क्षमः ।
पुरश्चरण-हीनो हि न मन्त्रः फल-दायकः ॥
जपाद् दशांशतो होमः तद्-दशांशेन तर्पणम् ।
मार्जनं तद्-दशांशेन तद्-दशांशेन भोजनम् ॥
वटे श्मशानेऽरण्ये वा शून्यागारे चतुष्पथे ।

अर्द्ध-रात्रेऽथ मध्याह्ने पुरश्चर्याचरेत् सुधीः ॥
त्रिपुरा-बाला मन्त्रस्य ऋषिः प्रोक्तस्तु दक्षिणा ।
गायत्री छन्दमाख्यातं देवता हि बालेति च ॥
वाग्भवं बीजं शक्तिः स्यान्मदनं कीलकं मतम् ।
विद्यार्थे विनियोगः स्यात् एवं ऋष्यादि-कल्पना ॥
वाग्भवेनाचरेन्न्यासं सर्व-मन्त्रं स्व-देहजम् ।
उपाङ्गं शृणु देवेशि ! रहस्यं सर्व-कामदम् ॥
यस्य श्रवण-मात्रेण कोटि-पूजा-फलं लभेत् ।
गणेशो वटुकश्चैव योगिनी-क्षेत्रपालकाः ।
एते द्वारे सदा पूज्याः पूर्व-पश्चिमयोः क्रमात् ॥
इन्द्रादीन् पूजयेद् बाह्ये तेषामस्त्राणि तद्-बहिः ।
पत्राग्रे पूजयित्वा च भैरवानष्ट च क्रमात् ॥
असिताङ्गो रुरुश्चैव चण्ड-क्रोधस्तथैव च ।
उन्मत्तश्च कपालश्च संहारो भीषणाष्टमः ॥
केसरेषु च देवेशि ! अष्ट-शक्तीन् समर्चयेत् ।
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥
वाराही च तथेन्द्राणी चामुण्डा सप्त मातरः ।
अष्टमी तु महालक्ष्मी सम्पूज्या ह्यष्ट-योनिषु ॥
सुभगादीनष्ट-शक्ती सम्पूज्या सुसमाहितः ।
सुभगा-भगरूपिण्यौ भगमालिन्यतः परम् ॥
नङ्गा ह्यनङ्गकुसुमा मेखला मदनेति च ।

त्रिकोणेषु च सम्पूज्या रति-प्रीति-मनोभवाः ॥
कामेश्वरं महेशानि ! विन्दौ सम्पूजयेत् सदा ।
गन्धाक्षतादि-पुष्पैश्च धूप-दीपादि-तर्पणैः ॥
एतल्लयाङ्गमीशानि ! सर्व-देव-रहस्यकम् ।
गोपनीयं विशेषेण सर्वस्वं मम पार्वति ॥

एतन्मन्त्रं गुरोर्लब्ध्वा न द्रुतं न विलम्बितम् ।
अक्षराक्षरके देवि ! जपेन्मौक्तिक-पंक्तिवत ॥
तद्-गतश्चैक-चित्तश्च शास्त्रोक्त-विधिना सुधीः ।
देव्यास्तु पुरतो लक्षं हुत्वा लक्ष-त्रयं जपेत् ॥
करवीर-प्रसूनं तु क्षीराज्यं खण्ड-संयुतम् ।
कुण्ड-योन्याकृते धीमान् जपान्ते जुहुयात् सुधीः ॥
अनुष्ठाने कृते धीमान् पूर्ण-सेवा-कृतो भवेत् ।
ततो ददाति कामान् वै देवी बाला महेश्वरी ॥
गुरुं सन्तोष्य विधिवल्लब्ध्वा मन्त्र-परं हि मम ।
अनेन विधिना युक्तो मन्द-भाग्योऽपि सिद्ध्यति ॥

लक्षमेकं जपेद्यस्तु साधको विजितेन्द्रियः ।
दर्शनात् क्षुभ्यते सर्व-योषितो मदनातुराः ॥
पतन्ति साधकस्याग्रे निर्लज्जा भय-वर्जिताः ।
जप्तेन च द्वि-लक्षेण ये यस्मिन् विषये स्थिताः ॥
आगच्छन्ति यथा तीर्थं मुक्तं च कुल-विग्रहे ।
ददते तस्य सर्वस्वं तस्यैव च वशे स्थितः ॥

त्रीणि लक्षैस्तथा जप्तैर्मण्डलीकं समण्डलम् ।
वशमायान्ति ते सर्वे नात्र कार्या विचारणा ॥
षड्भिर्लक्षैर्महीपाल स-भृत्य-बल-वाहनम् ।
लक्षैर्द्वादशकैर्जप्तैर्यक्ष---रक्षोरगेश्वरः ॥
वशमायान्ति ते सर्वे आज्ञा कुर्वन्ति नित्यशः ।
त्रि-पञ्च-लक्षैर्जप्तैस्तु साधकेन्द्रस्य धीमतः ॥
सिद्ध-विद्याधरश्चैव गन्धर्वाप्सरसो गणाः ।
वशमायान्ति ते सर्वे नात्र कार्या विचारणा ॥
हठात् श्रवण-विज्ञानं सर्वज्ञत्वं प्रजायते ।
तस्याष्टादशभिर्लक्षैर्देहिनान्येन साधकः ॥
उत्तिष्ठे सेदिनीं त्यक्त्वा दिव्य-देहस्तु जायते ।
भ्रमते स्वेच्छया लोके छिद्रां पश्यति मेदिनेः ॥
अष्टाविंशतिभिर्लक्षैर्विद्याधर - पतिर्भवेत् ।
साधकस्तु भवेद् धीमान् काम-रूपो महा-बलः ॥
त्रिंश-लक्षैस्तथा जप्तैर्ब्रह्म-विष्णु-समो भवेत् ।
रुद्रत्वं षष्टिभिर्लक्षैः शरीरत्वमशीतिभिः ॥
कोटिकारी महा-योगी लीयते परमे पदे ।
साधकस्तु भवेद् योगी त्रैलोक्येनाति-दुर्लभः ॥
त्रिपुरे त्रिपुरे त्वेकं शिवं परम-कारकम् ।
अष्टमी द्वे चतुर्दश्यां नवमी द्वे तथैव च ॥
रात्रौ सम्पूजयेद् यस्माद् यथा-विभव-विस्तरैः ।
पलाश-काष्ठ-काशैश्च तुलसी च विसर्जयेत् ॥

जपनात् पातके भूयाल्लग्नेश्चापि श्रियं हरेत् ।
एवं सिद्धे मनुर्मन्त्री साधयेदिष्टमात्मनः ।।
एवं कृते भवेद् वश्यो रमया वसते गृही ।

तिलक-प्रयोगः

कर्पूर-कपिचाराणि सप्त-भागानि कल्पयेत् ।
चतुर्भाग-जटामांसी तावती रोचना मता ।।
कुंकुमा सप्त-भाग स्यात् त्रिभागं चन्दनं मतम् ।
अगरु नव-भागं स्यादिति भागा क्रमेण तु ।।
हिमाद्रि-कन्यका-पिष्टमेतत् सर्वं सुसाधितम् ।
आदाय तिलकं भाले कुर्याद् भूमि-पती नरान् ।।
वनिता मद-गर्वाढ्या मदोन्मत्तान् मतङ्गजान् ।।
सिंहान् व्याघ्रान् महान् सर्पान् भूत-वेताल-राक्षसान् ।।
दर्शनादेव नश्यन्ति तिलकं धारयेन्नरः ।।
इत्येत् पटलं गुह्यं मन्त्रराज-मयो ध्रुवम् ।
सर्व-तन्त्रेषु सर्वस्वं गोपनीयं मुमुक्षुभिः ।।

इति श्री विश्वसार-तन्त्रे त्रिपुरा-बाला-पटलं सम्पूर्णम् ।।

# श्री बाला सहस्रनाम-स्तवराजः

शौनक-उवाच—

कैलास-शिखरे रम्ये नाना-पुष्पोपशोभिते ।
कल्प-पादप-मध्यस्थे गन्धर्व-गण-सेविते ॥ १ ॥
मणि-मण्डप-मध्यस्थे नाना-रत्नोपशोभिते ।
तं कदाचित् सुखासीनं भगवन्तं जगद्-गुरुम् ॥ २ ॥
कपाल-खट्वाङ्ग-धरं चन्द्रार्द्ध-कृत-शेखरम् ।
त्रिशूल-डमरु-धरं महा-वृषभ-वाहनम् ॥ ३ ॥
जटा-जूट-धरं देवं वासुकि-कण्ठ-भूषणम् ।
विभूति-भूषणं देवं नील-कण्ठं त्रिलोचनम् ॥ ४ ॥
द्वीपि-चर्म-परीधानं शुद्ध-स्फटिक-सन्निभम् ।
सहस्रादित्य-सङ्काशं गिरिजार्द्धाङ्ग-भूषणम् ॥ ५ ॥
प्रणम्य शिरसा नाथं कारणं विश्व-रूपिणम् ।
कृताञ्जलि-पुटो भूत्वा प्राह तं शिखि-वाहनः ॥ ६ ॥

कार्तिकेय उवाच—

देव-देव महादेव सृष्टि-स्थित्यन्त-कारक ।
त्वं गतिः सर्व-देवानां त्वं गतिः सर्व-देहिनाम् ॥ ७ ॥
त्वं गतिः सर्व-देवानां त्वं गतिर्विभो ।
त्वमेव जगदाधारस्त्वमेव विश्व-कारणम् ॥ ८ ॥

त्वमेव पूज्यः सर्वेषां त्वदन्यो नास्ति मे गतिः ।
किं गुह्यं परमं लोके किमेकं सर्व-सिद्धिदम् ।। ९
किमेकं परमं सृष्टिः किं भौमैश्वर्य-मोक्षदम् ।
विना तीर्थेन तपसा विना वेदैर्विना मखैः ।। १०
विना जाप्येन ध्यानेन कथं सिद्धिमवाप्नुयात् ।
कस्मादुत्पद्यते सृष्टिः कस्मिंश्च विलयो भवेत् ।। ११
कस्मादुत्तीर्यते देव संसारार्णव-सङ्कटात् ।
तदहं श्रोतुमिच्छामि कथयस्व महेश्वर ।। १२

श्री महादेव उवाच—

साधु साधु त्वया पृष्टोऽस्म्यहं पार्वती-नन्दन ।
अस्ति गुह्य-तमं पुत्र कथयिष्याम्यसंशयम् ।। १३
सत्त्वं रजस्तमश्चैव ब्रह्म-विष्णु-शिवादयः ।
ये चान्ये बहवो भूताः सर्वे प्रकृति-सम्भवाः ।। १४
सैव देवी परा-शक्तिर्महा-त्रिपुरसुन्दरी ।
सैव संहरते विश्वं जगदेतच्चराचरम् ।। १५
आधारं सर्व-भूतानां सैव रोगार्ति-हारिणी ।। १६
इच्छा-शक्तिः क्रियारूपा ब्रह्मविष्णुशिवात्मिका ।
त्रिधा शक्ति-स्वरूपेण सृष्टि-स्थिति-विनाशिनी ।। १७
सृज्यते ब्रह्म-रूपेण विष्णु-रूपेण रक्षति ।
हरते रुद्र-रूपेण जगदेतच्चराचरम् ।। १८
यस्य योनौ जगत् सर्वमद्यापि वर्ततेऽखिलम् ।
यस्यां प्रलीयते चान्ते यस्यां च जायते पुनः ।। १९

यां समाराध्य त्रैलोक्ये सम्प्राप्त पदमुत्तमम् ।
तस्य नाम-सहस्रं ते कथयामि शृणुष्व तत् ॥ २० ॥

विनियोगः—

ॐ अस्य श्रीबाला-त्रिपुरा-सहस्रनाम-स्तोत्र-मन्त्रस्य भगवान् दक्षिणामूर्तिर्वामदेवो ऋषिः, गायत्री छन्दः, प्रकट-गुप्त-गुप्ततर-सम्प्रदाय -कुल- कौलोत्तीर्णा निगर्भ-रहस्यातिरहस्य-परापर - रहस्याचिन्त्य - वर्तिनी देवता, आकाश वीजं, माया शक्तिः, काम-राज कीलकं (जीवो बीजं, बुद्धिः शक्तिः, उदानो बीजं, सुषुम्ना-नाड्यादि-सरस्वती शक्तिः), समस्त-धर्मार्थ-काम-मोक्षार्थे जपे विनियोगः ।

ध्यानं—

आधारे तरुणार्क-बिम्ब-सदृशं हेम-प्रभं वाग्भवं,
बीजं मन्मथमिन्द्र-गोप-सदृशं हृत्पङ्कजे संस्थितम् ।
चक्रं भाल-मयं शशाङ्क-रुचिरं बीजं तु तार्तीयकं,
ये ध्यायन्ति पद-त्रयं तव शिवे ! ते यान्ति सूक्ष्मां गतिं

कल्याणी कमला काली कराली काक-रूपिणी ।
कामाक्षा कामदा काम्या कामना काम-चारिणी ॥ १ ॥
कौमारी करुणा-मूर्तिः कलि - कल्मष-नाशिनी ।
कात्यायनी कलाधारा कौमुदी कमल-प्रिया ॥ २ ॥
कीर्तिदा बुद्धिदा मेधा नीतिज्ञा नीति-वत्सला ।
माहेश्वरी महा-माया महा-तेजा महेश्वरी ॥ ३ ॥

कालरात्रिर्महारात्रिः कालिन्दो कल्प-रूपिणी ।
महा-जिह्वा महा-लोला महा-दंष्ट्रा महा-भुजा ।। ४ ।।
महा-मोहान्धकारघ्नी महा-मोक्ष - प्रदायिनी ।
महा-दारिद्रच-राशिघ्नी महा-शत्रु-विमर्दिनी ।। ५ ।।
महा - शक्तिर्महा - ज्योतिर्महासुर - विमर्दिनी ।
महा-काया महा-वीजा महा-पातक-नाशिनी ।। ६ ।।
महा-मखा मन्त्र-मयी मणिपूर - निवासिनी ।
मानसी मानदा मान्या मनश्चक्षुरगोचरा ।। ७ ।।
गण-माता च गायत्री गण-गन्धर्व-सेविता ।
गिरिजा गिरिशा साध्वी गिरिसा गिरि-सम्भवा ।। ८ ।।
चण्डेश्वरी चन्द्र-रूपा प्रचण्डा चण्ड-मालिनी ।
चर्चिका चर्चिताकारा चण्डिका चारु-रूपिणी ।। ९ ।।
यज्ञेश्वरी यज्ञ-रूपा जप-यज्ञ-परायणा ।
यज्ञ-माता यज्ञ-गोप्त्री यज्ञेशी यज्ञ-सम्भवा ।। १० ।।
यज्ञ-सिद्धिः क्रिया-सिद्धिर्यज्ञाङ्गी यज्ञ-रक्षगा ।
यज्ञ-प्रिया यज्ञ-रूपा याज्ञी यज्ञ-कृपालया ।। ११ ।।
जालन्धरी जगन्माता जात-वेदा जगत्-प्रिया ।
जितेन्द्रिया जित-क्रोधा जननी जन्म-दायिनी ।। १२ ।।
गङ्गा गोदावरी गौरी गौतमी च शत-हृदा ।
घुर्घुरा वेद-गर्भा च रेविका कर-सम्भवा ।। १३ ।।
सिन्धुर्मन्दाकिनी क्षिप्रा यमुना च सरस्वती ।
चन्द्रभागा पिपाशा च गण्डकी विन्ध्य-वासिनी ।। १४ ।।

नर्मदा कह्न-कावेरो वेत्रवत्या च कौशिकी ।
महोन-तनया चैव अहल्या चण्यकावती ॥ १५ ॥
अयोध्या मथुरा माया काशि काञ्चि वन्तिका ।
द्वारावती च तीर्थेशी महा-किल्विष-नाशिनी ॥ १६ ॥
पद्मिनी पद्म-मध्यस्था पद्म-किञ्जल्क-वासिनी
पद्म-वक्त्रा च पद्माक्षी पद्मस्था पद्म-सम्भवा ॥ १७ ॥
ह्रींकारी कुण्डली धात्री हृत्-पद्मस्था सुलोचना ।
श्रींकारी भूषणा लक्ष्मीः क्लींकारी क्लेश-नाशिनी ॥ १८
हरि-प्रिया हरेर्मूर्तिर्हरि-नेत्र-कृतालया ।
हरि-वक्त्रोद्भवा शान्ता हरि-वक्षः-स्थितालया ॥ १९ ॥
वैष्णवी विष्णु-रूपा च विष्णु-माता-स्वरूपिणी ।
विष्णु-माया विशालाक्षी विशाल-नयनोज्ज्वला ॥ २० ॥
विश्वेश्वरी च विश्वात्मा विश्वेशी विश्व-रूपिणी ।
शिवेश्वरी शिवाधारा शिव-नाथा शिव-प्रिया ॥ २१ ॥
शिव-माता शिवाक्षी च शिवदा शिव-रूपिणी ।
भवेश्वरी भवाराध्या भवेशी भव-नायिका ॥ २२ ॥
भव-माता भव-गम्या भव-कण्टक-नाशिनी ।
भव-प्रिया भवानन्दा भवानी भव-मोचिनी ॥ २३ ॥
गीतिर्वरेण्या सावित्री ब्रह्माणी ब्रह्म-रूपिणी ।
ब्रह्मेशी ब्रह्मदा ब्राह्मी ब्रह्माणी ब्रह्म-वादिनी ॥ २४ ॥
दुर्गस्था दुर्ग-रूपा च दुर्गा दुर्गार्ति-नाशिनी ।
त्रयोदा ब्रह्मदा ब्राह्मी ब्रह्माणी ब्रह्म-वादिनी ॥ २५ ॥

त्वगस्था त्वग-रूपा च त्वगा त्वगार्ति-हारिणी ।
स्वर्गमा निर्गमा दाता दाया दोग्ध्री दुरापहा ।। २६ ।।
दुरघ्नी च दुराराध्या-दूर-दुष्कृत-नाशिनी ।
पञ्चस्था पञ्चमी पूर्णा पूर्ण-पीठ-निवासिनी ।। २७ ।।
सत्त्वस्था सत्त्व-रूपा च सत्त्वदा सत्त्व-सम्भवा ।
रजस्था च रजोरूपा रजोगुण-समुद्भवा ।। २८ ।।
तामसी च तमोरूपा तामसी तमसः-प्रिया ।
तमोगुण-समुद्भूता सात्त्विकी राजसी तमी ।। २९ ।।
कला काष्ठा निमेषा च स्वकृता तदनन्तरा ।
अर्ध-मासा च मासा च सम्वत्सर-स्वरूपिणी ।। ३० ।।
युगस्था युग-रूपा च कल्पस्था कल्प-रूपिणी ।
नाना-रत्न-विचित्राङ्गी नानाभरण-मण्डिता ।। ३१ ।।
विश्वात्मिका विश्व-माता विश्व-पाशा विधायिनी ।
विश्वासकारिणी विश्वा विश्व-शक्तिर्विचक्षणा ।। ३२ ।।
जपा-कुसुम-सङ्काशा दाडिमी-कुसमोपमा ।
चतुरङ्गा चतुर्बाहुश्चतुरा चारु-हासिनी ।। ३३ ।।
सर्वेशी सर्वदा सर्वा सर्वज्ञा सर्व-दायिनी ।
सर्वेश्वरी सर्व-विद्या शर्वाणी सर्व-मङ्गला ।। ३४ ।।
नलिनी नन्दिनी नन्दा आनन्दानन्द-वर्द्धिनी ।
व्यापिनी सर्व-भूतेषु भव-भार-विनाशिनी ।। ३५ ।।
कुलीना कुल-मध्यस्था कुल-धर्मोपदेशिनी ।
सर्व-शृङ्गार-वेशाढ्या पाशांकुश-करोद्यता ।। ३६ ।।

सूर्य-कोटि-सहस्राभा चन्द्र-कोटि-निभानना ।
गणेश-कोटि-लावण्या विष्णु-कोटयरि-मर्दिनी ।। ३७ ।।
दावाग्नि-कोटि-ज्वलिनी रुद्र-कोट्युग्र-रूपिणी ।
समुद्र-कोटि-गम्भीरा वायु-कोटि-महाबला ।। ३८ ।।
आकाश-कोटि-विस्तारा यम-कोटि-भयङ्करा ।
मेरु-कोटि-समुच्छ्राया गुण-कोटि-समृद्धिदा ।। ३९ ।।
निष्कलङ्का निराधारा निर्गुणा गुण-र्वाजता ।
अशोका शोक-रहिता ताप-त्रय-विर्वाजता ।। ४० ।।
विशिष्टा विश्व-जननी विश्व-मोह-विधारिणी ।
चित्रा विचित्रा चित्राशी हेतु-गर्भा कुशेश्वरी ।। ४१ ।।
इच्छाशक्तिः ज्ञानशक्तिः क्रियाशक्ति शुचिस्मिता ।
श्रुति-स्मृति-मयी सत्या श्रुति-रूपा श्रुति-प्रिया ।। ४२ ।।
श्रुति-प्रज्ञा महा-सत्या पञ्च-तत्वोपरि-स्थिता ।
पार्वती हिमवत्पुत्री पाशस्था पाश-रूपिणी ।। ४३ ।।
जयन्ती भद्रकाली च अहल्या कुल-नायिका ।
भूत-धात्री च भूतेशी भूतस्था भूत-भाविनी ।। ४४ ।।
महा-कुण्डलिनी शक्तिर्महा-विभव - वर्द्धिनी ।
हंसाक्षी हंस-रूपा च हंसस्था हंस-रूपिणी ।। ४५ ।।
सोम-सूर्याग्नि-मध्यस्था मणिपूरक-वासिनी ।
षट्-पत्राम्भोज-मध्यस्था मणिपूर-निवासिनी ।। ४६ ।।
द्वादशार-सरोजस्था सूर्य-मण्डल - वासिनी ।
अकलङ्का शशाङ्काभा षोडशार-निवासिनी ।। ४७ ।।

द्वि-पत्र-दल-मध्यस्था ललाट - तल-वासिनी ।
डाकिनी शाकिनी चैव लाकिनी काकिनी तथा ॥ ४८ ॥
राकिनी हाकिनी चैव षट्-चक्र-क्रम-वासिनी ।
सृष्टि-स्थिति-विनाशा च सृष्टिस्थित्यंतकारिणी ॥ ४९ ॥
श्रीकंठा श्रीप्रिया कंठा नादाख्या बिन्दु-मालिनी ।
चतुःषष्टि-कलाधारा मेरु-दण्ड - समाश्रया ॥ ५० ॥
महाकाली द्युतिर्मेधा स्वधा तुष्टिर्महाद्युतिः ।
हिंगुला मङ्गल-शिवा सुषुम्णा-मध्य-गामिनी ॥ ५१ ॥
परा घोरा करालाक्षी विजया जय-शालिनी ।
हृत्पद्म-निलया देवी भीमा भैरव-नादिनी ॥ ५२ ॥
आकाश-लिङ्ग-भूता च भुवनोद्यान-वासिनी ।
महासूक्ष्मा भयाकाली भीम-रूपा महाबला ॥ ५३ ॥
मेनका-गर्भ-सम्भूता तप्त - काञ्चन-सन्निभा ।
अन्तस्था कूट-बीजा च त्रिकूटाचल-वासिनी ॥ ५४ ॥
वर्णाक्षा वर्ण-रहिता पञ्चाशद्-वर्ण-भेदिनी ।
विद्याधरी लोक-धात्री अप्सरा अप्सरः-प्रिया ॥ ५५ ॥
दक्षा दाक्षायणी दीक्षा दक्ष-यज्ञ-विनाशिनी ।
यशस्विनी यशःपूर्णा यशोदा-गर्भ-सम्भवा ॥ ५६ ॥
देवकी देव-माता च राधिका कृष्ण-वल्लभा ।
अरुन्धती शचीन्द्राणी गान्धारी गन्ध-मोदिनी ॥ ५७ ॥
ध्यानातीता ध्यानगम्या ध्याना ध्यानावधारिणी ।
लम्बोदरी च लम्बोष्ठा जाम्बूवती जलोदरी ॥ ५८ ॥

महोदरी मुक्त-केशी मुक्ति-कामार्थ-सिद्धिदा ।
तपस्विनी तपोनिष्ठा चापर्णापर्ण-पक्षिणी ॥ ५९ ॥
बाण-चाप-धरा वीरा पाञ्चाली पञ्चम-प्रिया ।
गुह्या गम्भीरा गहना गुह्य-तत्व-निरञ्जना ॥ ६० ॥
अशरीरा शरीरस्था संसारार्णव-तारिणी ।
अमृता निष्कला भद्रा सकाला कृष्ण-पिङ्गला ॥ ६१ ॥
चक्रेश्वरी चक्र-हस्ता पाश-चक्र-विनाशिनी ।
पद्मराग - प्रतीकाशा निर्मलाकाश-सन्निभा ॥ ६२ ॥
ऊर्ध्वस्था ऊर्ध्व-रूपा च ऊर्ध्व-पद्म-निवासिनी ।
कार्य-कारण-कर्त्री च पर्वाख्या रूप-संस्थिता ॥ ६३ ॥
रसज्ञा रस-मध्यस्था गन्धज्ञा गन्ध-रूपिणी ।
परब्रह्म - स्वरूपा च परब्रह्म-निवासिनी ॥ ६४ ॥
शब्द-ब्रह्म-स्वरूपा च शब्दस्था शब्द-वर्जिता ।
सिद्धिर्वृद्धि-परा वृद्धिः सकीर्तिर्दीप्ति-संस्थिता ॥ ६५ ॥
स्वगुह्या शाम्भवी शक्तिस्तत्वज्ञा तत्व-रूपिणी ।
सरस्वती भूत-माता महा-भूताधिप-प्रिया ॥ ६६ ॥
श्रुति - प्रज्ञाद्यमे सिद्धिः दक्ष-कन्यापराजिता ।
काम-सन्दीपिनी कामा सदा कामा कुतूहला ॥ ६७ ॥
भोगोपचार-कुशला अमला ह्यमलानना ।
भक्तानुकम्पिनी मैत्री शरणागत-वत्सला ॥ ६८ ॥
सहस्र-भुजा चिच्छक्तिः सहस्राक्षा शतानना ।
सिद्ध-लक्ष्मीर्महा-लक्ष्मीर्वेद-लक्ष्मीः सुलक्षणा ॥ ६९ ॥

यज्ञ-सारा तपस्सारा धर्म-सारा जनेश्वरी ।
विश्वोदरी विश्व-सृष्टा विश्वाख्या विश्वतोमुखी ॥७०॥
विश्वास्य-श्रवण-घ्राणा विश्व-माला परात्मिका ।
तरुणादित्य-सङ्काशा करणानेक-संकुला ॥ ७१ ॥
क्षोभिणी मोहिनी चैव स्तम्भिनी जृम्भिणी तथा ।
रथिनी ध्वजिनी सेना सर्व-मन्त्र-मयी त्रयी ॥ ७२ ॥
ज्ञान-मुद्रा महा-मुद्रा जप-मुद्रा महोत्सवा ।
जटा-जूट-धरा मुक्ता सूक्ष्म-शान्तिर्विभीषणा ॥ ७३ ॥
द्वीपि-चर्म - परीधाना चीर-वल्कल-धारिणी ।
त्रिशूल-डमरु-धरा नर-माला - विभूषिणी ॥ ७४ ॥
अत्युग्र-रूपिणी चोग्रा कल्पान्त-दहनोपमा ।
त्रैलोक्य-साधिनी साध्या सिद्ध-साधक-वत्सला ॥ ७५ ॥
सर्व-विद्या-मयी सारा असुराम्बुधि-धारिणी ।
सुभगा सुमुखी सौम्या सुशूरा सोम-भूषणा ॥ ७६ ॥
शुद्ध-स्फटिक-सङ्काशा महा-वृषभ-वाहिनी ।
महिषी महिषारूढा महिषासुर-घातिनी ॥ ७७ ॥
दमिनी दामिनी दान्ता दया दोग्ध्री दुरापहा ।
अग्नि-जिह्वा महा-घोराऽघोरा घोर-तरानना ॥ ७८ ॥
नारायणी नारसिंही नृसिंह-हृदय-स्थिता ।
योगेश्वरी योग-रूपा योग-माला च योगिनी ॥ ७९ ॥
खेचरी भूचरी खेला निर्वाण-पद-संश्रया ।
नागिनी नाग-कन्या च सुरेशा नाग-नायिका ॥ ८० ॥

विष-ज्वालावती दीप्ता कला-शत-विभूषणा ।
भीम-वक्त्रा महा-वक्त्रा वक्त्राणां कोटि-धारिणी ॥८१॥
महदात्मा च धर्मज्ञा धर्माति-सुख-दायिनी ।
कृष्ण - मूर्तिर्महा - मूर्तिर्घोर - मूर्तिर्वरानना । ८२ ॥
सर्वेन्द्रिय - मनो - माता सर्वेन्द्रिय-मनो-मयी ।
सर्व-संग्राम - जयदा सर्व - प्रहरणोद्यता ॥ ८३ ॥
सर्व - पीडोपशमनी सर्वारिष्ट - विनाशिनी ।
सर्वैश्वर्य - समुत्पत्तिः सर्व-ग्रह - विनाशिनी ॥ ८४ ॥
भीतिघ्नी भक्ति-गम्या च भक्तानामार्ति-नाशिनी ।
मातङ्गी मत्त-मातङ्गी मातङ्ग-गण-मण्डिता ॥ ८५ ॥
अमृतोदधि - मध्यस्था कटि - सूत्रैरलंकृता ।
अमृत-द्वीप-मध्यस्था प्रबला वत्सलोज्ज्वला ॥ ८६ ॥
मणि-मण्डप-मध्यस्था रत्न -सिंहासन-स्थिता ।
परमानन्द - मुदिता ईषत् - प्रहसितानना ॥ ८७ ॥
कुमुदा ललिता लोला लाक्षा-लोहित-लोचना ।
दिग्-वासा देव-दूती च देव-देवादि-देवता ॥ ८८ ॥
सिंहोपरि-समारूढ़ा हिमाचल - निवासिनी ।
अट्टाट्ट-हासिनी घोरा घोर-दैत्य-विनाशिनी ॥ ८९ ॥
अत्युग्रा रक्त-वसना नाग - केयूर - मण्डिता ।
मुक्ता-हार-स्तनोपेता तुङ्ग - पीन-पयोधरा ॥ ९० ॥
रक्तोत्पल - दलाकारा मदाघूर्णित - लोचना ।
गण्ड-मण्डित-ताटङ्का गुञ्जा-हार-विभूषणा ॥ ९१ ॥

सङ्गीत-रङ्ग-रसना वीणा - वाद्य - कुतूहला ।
समस्त-देव-मूर्तिश्च ह्यसुर - क्षय - कारिणी ॥ ९२ ॥
खड्गिनी शूल-हस्ता च चक्रिणी चाक्ष-मालिनी ।
खड्गिनी चक्रिणी दान्ता वज्रिणी वज्र-दण्डिनी ॥ ९३॥
आनन्दोदधि - मध्यस्था कटि-सूत्रैरलंकृता ।
नानाभरण-दीप्ताङ्गी नाना- मणि-विभूषणा ॥ ९४ ॥
जगदानन्द - सम्भूतिश्चिन्तामणि-गुणाकारा ।
त्रैलोक्य-नमिता पूज्या चिन्मयानन्द-रूपिणी ॥ ९५ ॥
त्रैलोक्य-नन्दिनी देवी दुःख-दुःस्वप्न-नाशिनी ।
घोराग्नि-दाह-शमनी राज-दैवादि - शालिनी ॥ ९६ ॥
महापराध - राशिघ्नी महा-वैरि - भयापहा ।
रागादि-दोष-रहिता जरा - मरण - वर्जिता ॥ ९७ ॥
चन्द्र-मण्डल - मध्यस्था पीयूषार्णव - सम्भवा ।
सर्व-देवैं स्तुता देवी सर्व-सिद्धि - नमस्कृता ॥ ९८ ॥
अचिन्त्य-शक्ति-रूपा च मणि-मन्त्र-महौषधी ।
स्वस्तिः स्वस्तिमनी बाला मलयाचल-संस्थिता ॥ ९९ ॥
धात्री विधात्री संहारा रतिज्ञा रति-दायिनी ।
रुद्राणी रुद्र-रूपा च रौद्री रौद्रार्ति-हारिणी ॥ १००
सर्वज्ञा चौर-धर्मज्ञा रसज्ञा दीन-वत्सला ।
अनाहता त्रि-नयना निर्भरा निर्वृतौ परा ॥ १०१
परा घोर-करालाक्षी स्व-माता प्रिय-दायिनी ।
मन्त्रात्मिका मन्त्र-गम्या मन्त्र-माता समन्त्रिणी ॥ १०२

शुद्धानन्दा महाभद्रा निर्द्वन्द्वा निर्गुणात्मिका ।
धरणी धारिणी पृथ्वी धरा धात्री वसुन्धरा ।। १०३

मेरु-मन्दिर - मध्यस्था शङ्कर - वल्लभा ।
श्रीगतिः श्रीमयी श्रेष्ठा श्री-करी श्री-विभाविनी ।। १०४

श्रीदा श्रीमा श्री-निवासा श्रीमती श्रीमतां गतिः ।
उमा शारङ्गिणी कृष्णा कुटिला कुटिलालका ।। १०५

त्रिलोचना त्रिलोकात्मा पुण्यदा पुण्य-कीर्तिदा ।
अमृता सत्य-सङ्कल्पा सत्याशा-ग्रन्थि-भेदिनी ।। १०६

परेशा परमा विद्या परा - विद्या परात्परा ।
सुन्दराङ्गी सुवर्णाभा सुरासुर - नमस्कृता ।। १०७

प्रजा प्रजावती धन्या धन्य-धान्य-समृद्धिदा ।
ईशानी भुवनेशानी भुवना भुवनेश्वरी ।। १०८

अनन्तानन्त - महिमा जगत्सारा जगद्भवा ।
अचिंत्य-शक्ति महिमा चिंत्याचिंत्य-स्वरूपिणी ।। १०९

ज्ञान-गम्या ज्ञान-मूर्तिर्ज्ञानदा ज्ञान-शालिनी ।
अमिता घोर-रूपा च सुधा-धारा सुधावहा ।। ११०

भास्करी भासुरी भाती भास्वदुत्तान-शायिनी ।
अनसूया क्षमा लज्जा दुर्लभा भुवनात्मिका ।। १११

विश्ववन्द्या विश्व-वीजा विश्व-धीर्विश्वसंस्थिता ।
शीलस्था शील-रूपा च शीला शील-प्रदायिनी ।। ११२

बोधिनी बोध-कुशला रोधिनी वाधिनी तथा ।
विद्योतिनी विचित्रात्मा विद्युत्-पटल-सन्निभा ।। ११३

विश्व-योनिर्महा-योनिः कर्म-योनिः प्रियंवदा ।
रोगिणी रोग-शमनो महा-रोग-भयावहा ॥ ११४
वरदा पुष्टिदा देवी मानदा मानव-प्रिया ।
कृष्णाङ्ग-वाहिनी चैव कृष्णा कृष्ण-महोदरी ॥ ११५
शाम्भवी शम्भुरूपा च शम्भुरूपा शम्भुसम्भवा ।
विश्वोदरी विश्व-माता योग-मुद्रा च योगिनी ॥ ११६
वागीश्वरी योग-मुद्रा योगिनी - कोटि-सेविता ।
कौलिकानन्द-कन्या च शृङ्गाट-पीठ-वासिनी ॥ ११७
क्षेमङ्करी सर्व-रूपा दिव्य-रूपा दिगम्बरा ।
धूम्र-वक्त्रा धूम्र-नेत्रा धूम्र-केशी च धूसरा ॥ ११८
पिनाकि-रुद्र-वेताली महा-वेताल - रूपिणी ।
तपिनी तापिनी दक्षा विष्णु-विद्या त्वनाथिता ॥ ११९
अंकुरा जठरा तीव्रा अग्नि-जिह्वा भयापहा ।
पशुघ्नी पशु-रूपा च पशुदा पशु-वाहिनी ॥ १२०
पिता माता च भ्राता च पशु-पाश-विनाशिनी ।
चन्द्रमा चन्द्र-रेखा च चन्द्र-कान्ति-विभूषणा ॥ १२१
कुंकुमाङ्कित - सर्वाङ्गी सुधीर्बुद्बुद-लोचना ।
शुक्लाम्बर-धरा देवी वीणा-पुस्तक-धारिणी ॥ १२२
श्वेत-वस्त्र-धरा देवी श्वेत-पद्मासन-स्थिता ।
रक्ताम्बरा च रक्ताङ्गी रक्त-पद्म-विलोचना ॥ १२३
निष्ठुरा क्रूर-हृदया अक्रूरा मित - भाषिणी ।
आकाश-लिङ्ग-सम्भूता भुवनोद्यान-निवासिनी ॥ १२४

महा-सूक्ष्मा च कङ्काली भीम-रूपा महाबला ।
अनुपम्य - गुणोपेता सदा मधुर - भाषिणी ॥ १२५
विरूपाक्षी सहस्राक्षी शताक्षी बहु-लोचना ।
दुस्तरी तारिणी तारा तरुणी तार-रूपिणी ॥ १२६
सुधा-धारा च धर्मज्ञा धर्म-योगोपदेशनी ।
भगेश्वरी भगाराध्या भगिनी भगना-प्रिया ॥ १२७
भग-विश्वा भग-क्लिन्ना भग-योनिर्भगप्रदा ।
भगेश्वरी भग-रूपा भग-गुह्या भगावहा ॥ १२८
भगोदरी भगानन्दा भगाढ्या भग-मालिनी ।
सर्व-संक्षोभिणी-शक्तिः सर्व-विद्राविणी तथा ॥ १२९
मालिनी माधवी माध्वी मद-रूपा मदोत्कटा ।
भेरुण्डा चण्डिका ज्योत्स्ना विश्व-चक्षुस्तपोवहा ॥ १३०
सुप्रसन्ना महा-दूती यम-दूती भयङ्करी ।
उन्मादिनी महा - रूपा दिव्य-रूपा सुरार्चिता ॥ १३१
चैतन्य-रूपिणी नित्या नित्य-क्लिन्ना मदोल्लसा ।
मदिरानन्द-कैवल्या मदिराक्षी मदालसा ॥ १३२
सिद्धेश्वरी सिद्ध-विद्या सिद्धाद्या सिद्ध-वन्दिता ।
सिद्धार्चिता सिद्ध-माता सिद्ध-सर्वार्थ-साधिका ॥ १३३
मनोन्मयी गुणातीता परं-ज्योतिः-स्वरूपिणी ।
परेशी पारगा पारा पार-सिद्धिः परा-गतिः ॥ १३४
विमला मोहिनी - रूपा मधु-पान-परायणा ।
वेद-वेदाङ्ग - जननी सर्व-शास्त्र - विशारदा ॥ १३५

सर्व-वेद - मयो विद्या सर्व-शास्त्र-मयी तथा ।
सर्व-ज्ञान-मयी देवी सर्व-धर्म - मयीश्वरी ।। १३६
सर्व-यज्ञ-मयी यज्वा सर्व-मन्त्राधिकारिणी ।
त्रैलोक्याकर्षिणी देवी सर्वाद्यानन्द-रूपिणी ।। १३७
सर्व-सम्पत्त्यधिष्ठात्री सर्व-विद्राविणी परा ।
सर्व-संक्षोभिणी देवी सर्व-मङ्गल-कारिणी ।। १३८
त्रैलोक्य-रञ्जनी देवी सर्व-स्तम्भन - कारिणी ।
त्रैलोक्य-जयिनी देवी सर्वोन्माद-स्वरूपिणी ।। १३९
सर्व-सम्मोहिनी देवी सर्व - वश्यङ्करी तथा ।
सर्वार्थ-साधिनी देवी सर्व-सम्पत्ति-दायिनी ।। १४०
सर्व-काम-प्रदा देवी सर्व - मङ्गल - कारिणी ।
सर्व-सिद्धि-प्रदा देवी सर्व - दुःख-विमोचिनी ।। १४१
सर्व-मृत्यु-प्रशमनी सर्व-विघ्न - विनाशिनी ।
सर्वाङ्ग-सुन्दरी मातासर्व - सौभाग्य-दायिनी ।। १४२
सर्वदा सर्व - शक्तिश्च सर्वैश्वर्य - फल-प्रदा ।
सर्व-ज्ञान-मयी देवी सर्व-व्याधि - विनाशिनी ।। १४३
सर्वाधारा सर्व- रूपा सर्व - पाप - हरा तथा ।
सर्वानन्द-मयी देवी सर्व - रक्षा - स्वरूपिणी ।। १४४
सर्व-लक्ष्मी - मयी विद्या सर्वेप्सित - फल-प्रदा ।
सर्व - दुःख - प्रशमनी परमानन्द - दायिनी ।। १४५
त्रिकोण-निलया त्रिष्टा त्रि-मता त्रि-तनु-स्थिता ।
त्रै-विद्या चैव त्रि-स्मारा त्रैलोक्य-त्रिपुरेश्वरी ।। १४६

त्रिकोदरस्था त्रिविधा त्रिपुरा त्रिपुरात्मिका ।
त्रि-धात्री त्रि-दशा त्र्यक्षा त्रिघ्नी त्रिपुर-वाहिनी ।। १४७

त्रिपुर-श्रीः स्व-जननी बाला-त्रिपुर-सुन्दरी ।
श्रीमत्-त्रिपुर - सुन्दर्या मन्त्र-नाम - सहस्रकम् ।। १४८

गुह्याद् गुह्य-तरं पुत्र तव प्रीत्या प्रकीर्तितम् ।
गोपनीयं प्रयत्नेन पठनीयं प्रयत्नतः ।। १४९

नातः पर-तरं पुण्यं नातः पर-तरं शुभम् ।
नातः पर-तरं स्तोत्रं नातः पर-तरा गतिः ।। १५०

स्तोत्रं सहस्रनामाख्यं मम वक्त्राद् विनिस्सृतम् ।
यः पठेत् परमा भक्त्या शृणुयाद् वा समाहितः ।। १५१

मोक्षार्थी लभते मोक्षं सुखार्थी सुखमवाप्नुयात् ।
फलार्थी लभते कामान् धनार्थी लभते धनम् ।। १५२

विद्यार्थी लभते विद्यां यशोऽर्थी लभते यशः ।
कन्यार्थी लभते कन्यां सुतार्थी लभते सुतम् ।। १५३

गुर्विणी लभते पुत्रं कन्या विन्दति सत्पतिम् ।
मूर्खोऽपि लभते शास्त्रं चौरोऽपि लभते गतिम् ।। १५४

संक्रान्तावमावास्यामष्टम्यां भौम - वासरे ।
पठेद् वा पाठयेद् वापि शृणुयाद् वा समाहितः ।। १५५

पौर्णमास्यां चतुर्दश्यां नवम्यां च विशेषतः ।
स मुक्तः सर्व-पापेभ्यो कामेश्वर-समो भवेत् ।। १५६

लक्ष्मीवान् सुतवांश्चैव वल्लभः सर्व-योषिताम् ।
तस्या वश्यं भवेद् दास्यं त्रैलोक्यं सचराचरम् ।।१५७

रुद्रं दृष्ट्वा यथा देवा विष्णुं दृष्ट्वा च दानवाः ।
पन्नगा गरुडं दृष्ट्वा सिंहं दृष्ट्वा यथा मृगाः ॥ १५८

मण्डूका भोगिनं दृष्ट्वा मार्जारं मूषको यथा ।
कीट-वत् प्रपलायन्ते तस्य वक्त्रावलोकनात् ॥ १५६

अग्नि-चौर-भयं तस्य कदाचिन्नैव सम्भवेत् ।
पातका विविधाः सन्ति मेरु - मन्दर-सन्निभाः ॥ १६०

भस्मसात् तत्क्षणं कुर्यात् तृणं वह्नि-युतं यथा ।
एकधा पठनादेव सर्व - पाप - क्षयो भवेत् ॥ १६१

दशधा पठनादेव वाञ्छा - सिद्धिः प्रजायते ।
नश्यन्ति सहसा रोगा दशधावर्तनेन च ॥ १६२

सहस्रं वा पठेत् यस्तु खेचरो जायते नरः ।
सहस्र-दशकं यस्तु पठेद् भक्ति - परायणः ॥ १६३

सा तस्य जगतां धात्री प्रत्यक्षा भवति ध्रुवम् ।
लक्षं पूर्णं यदा पुत्र ! स्तव-राजं पठेत् सुधीः ॥ १६४

भव-पाश-विनिर्मुक्तो मम तुल्यो न संशयः ।
सर्व-तीर्थेषु यत् पुण्यं सर्व-यज्ञेषु यत् फलम् ॥ १६५

सर्व-देवेषु यत् पुण्यं तत् फलं परिकीर्तितम् ।
तत् फलं कोटि-गुणितं सकृज्जप्त्वा लभेन्नरः ॥ १६६

श्रुत्वा महा - बलश्चाशु पुत्रवान् सर्व-सम्पदः ।
देहान्ते परमं स्थानं यत् सुरैरपि दुर्लभम् ॥ १६७

अद्वैत - योगिभिर्ज्ञेयं मार्गगैरपि दुर्लभम् ।

स यास्यति न सन्देहः स्तव-राज-प्रकीर्तनात् ॥ १६८
यः सदा पठते भक्तो मुक्तिस्तस्य न संशयः ॥

॥ इति श्री वामकेश्वर-तन्त्रे सनत्कुमार-सम्वादे श्रीजगदम्बा-
बाला-त्रिपुर-सुन्दर्याः सहस्र-नाम-स्तव-राजः समाप्तः ॥

फा० ९

# श्री बाला-मन्त्र-सिद्धि-स्तवं

ब्राह्मी-रूप-धरे देवि ब्रह्मात्मा ब्रह्म-पालिका ।
विद्या-मन्त्रादिकं सर्वं सिद्धिं देहि परेश्वरि ॥ १ ॥
महेश्वरी महामाया मानन्दा मोह-हारिणी ।
मन्त्र-सिद्धि-फलं देहि महा-मन्त्रार्णवेश्वरी ॥ २ ॥
गुह्येश्वरी गुणातीता गुह्य-तत्वार्थ-दायिनी ।
गुण-त्रयात्मिका देवी मन्त्र-सिद्धिं ददस्व माम् ॥ ३ ॥
नारायणी च नाकेशी नृ-मुण्ड-मालिनी परा ।
नानाननाना कुलेशी मन्त्र-सिद्धिं प्रदेहि मे ॥ ४ ॥
घृष्टि-चक्रा महा-रौद्री घनोपस-विवर्णका ।
घोर-घोर-तरा घोरा मन्त्र-सिद्धि-प्रदा भव ॥ ५ ॥
शक्राणी सर्व-दैत्यघ्नी सहस्र-लोचनी शुभा ॥
सर्वारिष्ट-विनिर्मुक्ता सा देवी मन्त्र-सिद्धिदा ॥ ६ ॥
चामुण्डा-रूप-देवेशी चलज्जिह्वा भयानका ।
चतुष्पीठेश्वरी देहि मन्त्र-सिद्धिं सदा मम ॥ ७ ॥
लक्ष्मी-लावण्य-वर्णा च रक्ता रक्त-महा-प्रिया ।
लम्ब-केशा रत्न-भूषा मन्त्र-सिद्धिं सदा दद ॥ ८ ॥
बाला वीरार्चिता विद्या विशाल-नयनानना ।
विभूति-दा विष्णु-माता मन्त्र-सिद्धिं प्रयच्छ मे ॥ ९ ॥

मन्त्र-सिद्धि-स्तवं पुण्यं महा-मोक्ष-फल-प्रदम् ।
महा-मोह-हरं साक्षात् सत्यं मन्त्रस्य सिद्धिदं ।। १० ।।
गोपनीयं महा-देवि गोप्याद्-गोप्य-तरं प्रिये ।
पठनीयं सदा भक्त्या न देयं यस्य कस्यचित् ।। ११ ।।

।। इति श्री महा-काल-सहितायां श्रीबाला-देव्या
मन्त्र-सिद्धि-स्तवं समाप्तम् ।।

# श्री बकारादि बाला सहस्र-नाम

श्रीदेव्युवाच—

नमस्ते नाथ ! भगवन् ! विष-भक्षण शङ्कर ।
ॐकार-पीठ-संवास ! मम रूपाणि सत्-प्रिय ॥ १ ॥
प्रसिद्धानि महा-चण्ड ! कुरु माधव-वन्दित ।
मद्-रूपिण्याश्च बालाया मन्त्र - नाम-सहस्रकम् ॥ २ ॥

शिव उवाच—

अथातः सम्प्रवक्ष्यामि त्रिपुरायाः शुभानि च ।
नाम-मन्त्र - सहस्राणि वदामि परमेश्वरि ॥ ३ ॥
कटकानां च घोराणि भक्तानां सुन्दराणि च ।
अनेक-मन्त्र - रूपाणि गुप्ता गुप्त-तराणि च ॥ ४ ॥
शत्रूणां भय-काराणि मित्राणां वृद्धिदानि च ।
मूल-मन्त्र-स्वरूपाणि प्रीत्यर्थं तव सुन्दरि ॥ ५ ॥
श्रुताश्रुत-महद् - बीज - रूपाणि हरि-मातृके ।
वक्ष्येऽहं नाम - मन्त्राणि सागरोद्भव - लोचने ॥ ६ ॥

विनियोगः—

अस्य श्रीबाला-त्रिपुर - सुन्दरी - सहस्रनाम-महा-मन्त्रस्य परब्रह्म ऋषिः, आदि-माया छन्दः, श्रीबाला-त्रिपुरेश्वरी देवता, ऐंह्लींश्रींऐं बीजं, ऐंह्लींश्रींईं शक्तिः,

ऐं ह्लीं श्रींलां कीलकं, श्रीबाला-त्रिपुर-सुन्दरी-प्रसाद-सिद्धयर्थे पाठे विनियोगः ।

ऋष्यादि-न्यासः—

परब्रह्म-ऋषये नमः शिरसि । आदि-माया-छन्दसे नमः मुखे । श्रीबाला-त्रिपुरेश्वरी-देवतायै नमः । हृदये । ऐंह्लींश्रीऐं बीजाय नमः दक्ष-स्तने । ऐंह्लींश्रींइं शक्तये नमः वाम-स्तने । ऐंह्लींश्रींलां कीलकाय नमः नाभौ । श्रीबाला-त्रिपुर-सुन्दरी-प्रसाद - सिद्धयर्थे पाठे विनियोगाय नमः पादयोः ।

| षडङ्ग-न्यासः | कर-न्यासः | अङ्ग-न्यासः |
|---|---|---|
| ॐ-४ विराट्-पुरुषात्मिकायै श्रींह्लींऐंऐं | अंगुष्ठाभ्यां नमः | हृदयाय नमः |
| ॐ-३ इं श्रीपरब्रह्मेश्वर्यै श्रींह्लींइंऐंइं | तर्जनीभ्यां स्वाहा | शिरसे स्वाहा |
| ॐ-३ लांश्रीं अंगुष्ठ-मात्र-पुरुषात्मिकायै श्रींह्लींऐंलां | मध्यमाभ्यां वषट् | शिखायै वषट् |
| ॐ-३ लांश्रीं पञ्चदशी-त्रिकूट-मायायै श्रींह्लींऐंलां | अनामिकाभ्यां हुम् | कवचाय हुम् |
| ॐ-३ इं प्रसाद-वीजायै श्रींह्लींऐंइं | कनिष्ठाभ्यां वौषट् | नेत्र-त्रयाय वौषट् |
| ॐ-४ श्रीं महा-शक्ति-ज्ञानात्मि- | | |

क्रायै श्रींह्रींऐंऐं करतल-करपृष्ठाभ्यां फट् अस्त्राय फट्
[४=ऐं ह्रीं श्रीं ऐं, ३=ऐं ह्रीं श्रीं]

ध्यानम्—

ऐंकार-सुपद्मक-मध्य-गता, क्लींकार-विभूषित-नेत्र-पद्मा।
सौंकाराब्ज-विशालिनी च कूट-त्रया तु मनुवर्ण-विराजिता

मन्त्रः—

ॐ नमो भगवति ऐं क्लीं सौः श्रीमहा-मूल-बीजे
मम भोग-मोक्षतां देहि ह्रीं नमस्ते ह्रीं स्वाहा।

श्रींबाला बालिनी बाली बाल-चन्द्र-सुफालिका।
बालकी बाल-वृन्दा च बाल-सूर्य-सम-प्रभा ॥ १ ॥
बालिका बक-हारी च बलाकाक्षी बलायुधा।
बलेश्वरी बलासक्ता बल-धारा बल-प्रभा ॥ २ ॥
बल-वाहा बल-कारी बकारार्थ-समन्विता।
बन्धुकी बन्धु-वर्गा च बन्धूक-कुसुमानना ॥ ३ ॥
बान्धवी बन्धरी बन्धी बम्भराक्षी बलाङ्किनी।
बन्धु-पाला बन्धु-वृद्धिर्बम्भरालि-सुमालिका ॥ ४ ॥
बन्धुकाङ्गी बाल-बीजा बीजाबीज-समन्विता।
बीजेश्वरी बीज-रूपा बीज-मध्य-प्रवर्तिका ॥ ५ ॥
बीजाङ्गा बीज-मूला च बीज-तत्त्व-समायुता।
बीज-योगा बीज-कवचा बीज-नेत्रा च बीज-भृत् ॥ ६ ॥
बीजाक्षर-समायुक्त - मुख-चन्द्र - विराजिता।
बीज-नाभिर्बीज-जाला बीज-कण्ठ-विमण्डिता ॥ ७ ॥

बीज-कन्दा बीज-मन्त्रा बीजेशी बीज-नायिका ।
बीजात्मिका बीज-मूला बीज-मूलेश्वरी बरी ॥ ८ ॥
बहिरन्तः-कला बाही बहिरन्तर्निवासिनी ।
बहिः-काला बहिर्भावा बहिरन्तः-पदावली ॥ ९ ॥
बहिरन्तर्याग युक्ता बहिर्भूता बहिः-स्वरा ।
बहिर्वासा बहिर्मोहा बहिर्बीजा बडेश्वरी ॥ १० ॥
बन्धिनी बाल-पंक्तिश्च बन्धाबन्ध-विवर्जिता ।
ब्रह्मी ब्रह्मा बला ब्रह्मा बद्धपास्य-प्रभञ्जनी ॥ ११ ॥
ब्रह्मेश्वरी ब्रह्मदेवी बकारान्तः-प्रवेशिका ।
बल-हस्ता बलोत्कर्षा बर्बरी बर्बरासना ॥ १२ ॥
बर्बराक्षी बर्बरेशी बर्बासुर-विखण्डिनी ।
बुद्-बुदी बुद्बुदाभा च बुद्-बुदाक्षर-संयुता ॥ १३ ॥
बृहन्नाम्नी बृहद्-रोम-राजिता बृहदीश्वरी ।
बालानल-समायुक्ता बाल-भूत-हरा बृही ॥ १४ ॥
बृहन्निष्ठा बृहत्-कर्षा बृहन्मार्गा बुधेश्वरी ।
बुध-वन्द्या बुधासक्ता बुध-शक्रादि-वन्दिता ॥ १५ ॥
बुद्धिदा बुद्धिनी बुद्धिर्बुद्धि-रूपा बृहन्निधिः ।
बुद्ध्यात्मिका बुद्धि-वासा बुद्धिचार-समन्विता ॥ १६ ॥
बुद्धि-बीजा बृहन्निद्रा बुद्धि-कृद् बुद्धि-वासिनी ।
बुद्धि-निष्ठा बुद्धि-सेव्या बुद्धि-माता च बुद्धकी ॥ १७ ॥
बुद्धि-मध्य-भवासक्ता बुद्धि-रूपा च बोधिनी ।
बुद्ध-पुष्प-समायुक्त-वीर - माला - विभूषिता ॥ १८ ॥

बुद्धीश्वरी बुद्धि-सिद्धिर्बल-दन्ता बर्हिनिशा ।
बलाक-दृष्टि-संराजा बल-पक्षि-महासना ॥ १९ ॥
बलेश्वर-महा-साल्वा बलभी नारसिंहिका ।
बल-शरभा बला-माला बल-कारा बलोदरी ॥ २० ॥
बाहु-विंशत्-समायुक्ता बाहु-सर्प-समन्विता ।
बाहु-भूषा बाहु-कीला बहिरन्तर्यशः-पदा ॥ २१ ॥
बहिः-पद्मा बहिः-सूर्या बहिरन्तः-क्रिया-युता ।
बकाराक्षर-संयुक्ता बाल-विष्णु-शिवेश्वरी ॥ २२ ॥
बगलास्या बलाकारा बगला-शक्ति-सेविता ।
बङ्गा बङ्गालिकी बङ्गी बङ्गाली बङ्ग-रूपिणी ॥ २३ ॥
बङ्ग-बीजा बङ्ग-जिह्वा बङ्ग-कीलक-संयुता ।
बङ्ग-मन्त्रा बङ्ग-यन्त्रा बङ्ग-तन्त्रा च बङ्गिनी ॥ २४ ॥
बङ्ग-भङ्ग-समाहारी बिन्दु-रूपा बिलेशिका ।
बिल्व-प्रभा बिल्व-पत्रा बिन्दु-मध्य-सुचारिणी ॥ २५ ॥
बिल्व-मुक्ताम्बिकेशा च बिल्व-पर्ण-सुमालिका ।
बाल-हन्त्री बला-नारी बाल-वृद्ध-प्रपालिनी ॥ २६ ॥
बिम्ब-दन्ता बिम्ब-रूपा बिम्ब-मध्य-विहारिणी ।
बिम्बोष्ठी बिम्बहर्त्री च बिम्बनेत्रा च बिम्बभृत् ॥ २७ ॥
बिम्बाबिम्ब-विसर्जा च बिम्बेश्वर-विमोहिनी ।
बिम्बासुर-हरा बिभ्री बिभ्राणी बिभ्र-मालिका ॥ २८ ॥
बिभ्राणि-तनगा बिसी बिभ्रच्चक्रा बिलायुधा ।
बिलेश्वर-समावन्द्या बिल्व-मूल-निवासिनी ॥ २९ ॥

बिल्व-मध्या बिल्वकाग्रा बृन्दावन-विहारिणी ।
बृन्देशी बृन्द-मध्यस्था बृन्दाबृन्द-समन्विता ।। ३० ।।
बृन्द-वीजा बृन्द-मूला बृन्दी-कृत-सुका बणी ।
बृन्देश्वरी बृन्द-माला बृन्दावन-वनेश्वरी ।। ३१ ।।
बृन्दावनस्थ-देवेशी बृन्दाबृन्द-करेश्वरी ।
बृन्दावनी बृन्दकेशी बृन्दितालक-संयुता ।। ३२ ।।
बृन्दासुर-वधोत्कर्षा बृन्दावन शिखान्तरा ।
बृन्द-वृक्ष-समायुक्त-हस्त - पद्म - विराजिता ।। ३३ ।।
बिसासक्ता बिसाचारा बिस-मन्त्रा बिसेश्वरी ।
बिस-हस्ता बिसाकारा बिस-सद्भाव-कारिणी ।। ३४ ।।
बिस-मूला बिसोत्कर्षा बिसाबिस-गणेश्वरी ।
बिस-तन्तु-तनोयाभा बिस-पल्लव-पादुका ।। ३५ ।।
बृहत्-कुम्भ-स्तन-द्वन्द्वा बृहती बृहि-धारिणी ।
बृहत्कारी बृहच्छत्रा बृहद्घोरा बृहीश्वरी ।। ३६ ।।
बुध-राजेश्वरी बृङ्क्षा बृङ्क्षाबृङ्क्ष-गणेश्वरी ।
बुधावतारिणी बृञ्जी बृङ्क्ष-सर्प-विमालिनी ।। ३७ ।।
ब्रह्म-निष्ठा ब्रह्म-तत्त्वा ब्रह्माब्रह्म-विचारिणी ।
ब्रह्म-शब्दा ब्रह्म-कीर्तिर्ब्रह्माणी ब्रह्म-शक्तिनी ।। ३८ ।।
ब्रह्मेश्वरी ब्रह्म-माता ब्रह्म-बीजा बहूदया ।
ब्रह्म-पादा ब्रह्म-वन्द्या ब्रह्म-तत्त्वार्थ-वादिनी ।। ३९ ।।
ब्रह्मेशी ब्रह्मरी ब्राह्मी ब्रह्माणी ब्रह्म-जीविका ।
ब्रह्म-प्राण-महाशक्तिर्ब्रह्मण्येश्वर-वन्दिता ।। ४० ।।

ब्रह्म-पुत्री ब्रह्म-भार्या ब्रह्म-माया च ब्रह्म-भृत् ।
ब्रह्म-वक्त्र-निवासा च ब्रह्म-शब्द-मयात्मिका ॥ ४१ ॥
ब्रह्म-लोक-समावासा ब्रह्मादि-शिव-सेविता ।
ब्रह्म-कमण्डलु-भूता ब्रह्म-विद्या-समायुता ॥ ४२ ॥
ब्रह्म-विद्यात्मिका ब्राह्मी ब्रह्म-बोध-प्रबोधिनी ।
बोधी बोधेश्वरी बोधा बोधिनी बोध-रूपिणी ॥ ४३ ॥
बोधान्तस्था बोध-नित्या बोध-शक्ता च बोधभृत् ।
बोध-नेत्र-सहस्रा च बोधेशो बोध-हेलिका ॥ ४४ ॥
बोध-वीजा बोध-काला बोधाबोध-विवर्जिता ।
बोध-मुक्तेश्वरासक्ता च बोधघ्ना बोध-दायिनी ॥ ४५ ॥
बोध-माता बोध-पूर्णा बोध-शक्ति-समन्विता ।
बोधवती बोध-वचा बोधी-कृत-सुशब्दिनी ॥ ४६ ॥
बोधितेन्द्र-समावेशा बोधाबोध-परायिणी ।
बोध-राक्षस-संहर्त्री बोध-बीज-निपातिनी ॥ ४७ ॥
ब्रह्म-रक्षः-समाकर्षा ब्रह्म-राक्षस-मोहिनी ।
ब्रह्म-रक्षः-समावेशा ब्रह्म-राक्षस-किङ्करा ॥ ४८ ॥
ब्रह्म-रक्षो-महोच्चाटा ब्रह्म-राक्षस-मारिणी ।
ब्रह्म-रक्षो-महास्तम्भी ब्रह्म-राक्षस-रक्तपा ॥ ४९ ॥
ब्रह्मेशी ब्राह्मणासक्ता ब्राह्मणस्था च बाणभृत् ।
ब्रह्मेश्वर-समासेव्या ब्राह्मण-प्रिय-मानसी ॥ ५० ॥
ब्रह्म-गन्ध ब्रह्म-धूपा ब्रह्म-पूजा बलङ्करी ।
ब्रह्म - विष्णु - महादेव-परब्रह्म-मयात्मिका ॥ ५१ ॥

ब्रह्म-किन्नर - गन्धर्व - यक्ष - भूत-ग्रहेश्वरी ।
बाणाधारा बाण-मध्या बाण-पृष्ठ-विराजिता ।। ५२ ।।
बाणेश्वरी बाण-वासा बाण-लिङ्ग-धराम्बिका ।
बाण-लिङ्गेश्वरी बाणी बाणिनी बाण-रूपिणी ।। ५३ ।।
बाण-हस्ता बाण-चक्रा बाणीरासन-मण्डिता ।
बाणिरी बाण-बीजा च बाण-सिंह-हरार्चिता ।। ५४ ।।
बाणीरेशी बाण-तन्त्रा बाण-मन्त्र-विमोहिनी ।
बाण-मन्त्र-सुनाम्नी तु बाणासुर-विमर्दिनी ।। ५५ ।।
बाणासुर-हरेशानी बाणा-बाण-निवासिनी ।
बाणाकारा बाण-वदनी बाणानन्द-प्रदायिनी ।। ५६ ।।
बाण-मूर्ति-समुत्कर्षा बाण-शम्भु-सुपृष्ठका ।
बदरी बद-रूपा च बदर्यर्थ-समायुता ।। ५७ ।।
बधिरी बद-वासा च बादरायण-पूजिता ।
बाद-नारायणी बन्दी बण्डावलि-विराजिता ।। ५८ ।।
बण्डेश्वरी बण्ड-बीजा बद्रिनारायणार्चिता ।
बदरेश्वर-सम्बन्धा बदरी-वन-वासिनी ।। ५९ ।।
बदरी-फल-कुश्चाङ्गा बदरी-फल-सम्प्रिया ।
बृन्दावन-समारूढा बडकाष्ठ-मया च तु ।। ६० ।।
बण्डासुर-वधोद्युक्ता बण्ड-हाल-हलायुधा ।
बिम्बाक्षी बिन्दिनी बिन्दी बिन्द्वबिन्दु-कलात्मिका ।। ६१
बहु-रूपा बहूत्साहा बहु-मन्त्रा बहु-प्रिया ।
बहु-वादा बहुच्छाया बहु-वार्ता तथा बहूः ।। ६२ ।।

बहु-वीजा बलेशानी बहु-कीर्तिर्बहु-धरा ।
बहु-योगा बिन्दु-वर्गा बिन्दा बिन्दु-निवासिनी ॥ ६३ ॥
बिन्दु-शत्रु-ललापाना बैन्दवासन-रञ्जिता ।
बिन्दु-मण्डल-मध्यस्था बिन्दुसी बिन्दु-मालिनी ॥ ६४ ॥
बिन्दु-युक्त-समावर्णा बिन्दु-सर्ग-विमातृका ।
बीज-कूट-त्रया बीजी बीजेश्वर-सुवाहिनी ॥ ६५ ॥
बीजासुर-मांस-खण्डा बीजानन्द-स्वरूपिणी ।
बीज-नाथा बीज-क्रूरा बीजङ्कुर-विवन्दिता ॥ ६६ ॥
बीज-पूरा बीज-पूर्णा बुण्ड-दण्ड-विधारिणी ।
बूर्णा बूर्ण-स्वरूपा च बूर्ण-ब्रह्म-महाध्वजा ॥ ६७ ॥
बृहन्नाथा बृहद्-विश्वा बृहदग्नि-विनाशिनी ।
बृहद्-भूमि-धरा ब्रूणी ब्रूणीताक्षर-मालिका ॥ ६८ ॥
ब्रूणिका ब्रूसणारा तु ब्रष-हस्ता कुलेश्वरी ।
बाणालङ्कार-देहा च बाणानन्दन-वाहिनी ॥ ६९ ॥
बलि-प्रिया बलादेशा बलि-हस्त-द्वयान्विता ।
बलि-काला बलिह-रात्रिर्बलि-भक्षण-मण्डिता ॥ ७० ॥
बलि-धर्मा बहिः-सोमा बलि-मित्रा बलानना ।
बलि-विश्व-मनोराजा बल्यन्तर - निवासिनी ॥ ७१ ॥
बलि-नियमा बहिर्मुण्डा बहु-सर्प-विष-प्रिया ।
बहिर्मुण्डा बर्हिः क्षुरा बाला-मणि-विपूजिता ॥ ७२ ॥
बद्ध-मुक्ता फलाङ्गा च बिम्ब-बिद्रुम-मण्डिता ।
बलाक-गुरु-सन्मार्गा बल-वद्-गुरु-वन्दिता ॥ ७३ ॥

बलावती बला-शक्तिर्बंक-जृम्भ-विमर्दिनी ।
बन्ध-चक्रेश्वरी बाणी बाणाबाण-निवासिनी ।। ७४ ।।
बाण-मध्योदका बाहा बल-वद्-गरुडासना ।
बल-वद्-वृषभारूढा बल-वद्-राज-हंसिका ।। ७५ ।।
बकिनी बाकिनी ब्रान्दा बाकिनी-गण-सेविता ।
बिकिनी ब्रङ्किनी ब्रन्धी बङ्गालाङ्ग-समन्विता ।। ७६ ।।
ब्लुकिनी ब्लुङ्किनी ब्लुङ्की बुकिनी बृन्दह-वन्दिता ।
ब्लुङ्किनी बैकिनी बङ्गी बङ्गालाक्षर-युक्तिनी ।। ७७ ।।
ब्लोङ्किनी ब्लौङ्किनी ब्लुञ्ची बौकिनी-जाल-सन्नुता ।
बङ्किनी बब्रुनी बाक्षी बक्षासुर - विभेदिनी ।। ७८ ।।
ब्लुङ्कार-मूर्ति-संराजा ब्लुं-ब्लुन्धार-सुमण्डिता ।
बक-योग-समाख्याता बादि-लान्त-समन्विता ।। ७९ ।।
बेती बेतालिका बेनी बेताली बेन-रूपिका ।
बेतालिनी बेत-बासा बेताबेत-समायुता ।। ८० ।।
बेतालाक्षा बेत-नासा बेताल-प्रमुखेश्वरी ।
बेताल-बीजा बेताला बेधाबेध-विनाशिनी ।। ८१ ।।
बुद्धितारा ब्लुङ्ककारा ब्लुङ्काब्लुङ्कविचारिणी ।
ब्लुङ्क-केशी ब्लेङ्क-वासा ब्लंहिङ्कार-समन्विता ।।८२ ।।
बं-हुङ्कार-मुखी बाची ब्लोङ्कारासक्त-मानसा ।
बड-बीजेश्वरी बाया बडवानल-लोचनी ।। ८३ ।।
बिन्दु-बाली बंग्य-कूर्मा बंग्याबंग्य-सुमच्छिका ।
बंग्य-पीठ-समावासा बंग्य-वर्णोनकूलिनी ।। ८४ ।।

बङ्गेश्वरी बङ्ग-नित्या बंग्य-सिंह-सुवाहना ।
बींग्य-कीलक-संयुक्त-ऋषि - छन्दोनुकूलिका ॥ ८५ ॥
बेलकी बेल-नेत्रा च बिड - लक्षण-संयुता ।
बिंढच्च-बीजा बिढच्च-नाडी बिंढर्चाबिढचप्रवर्तिका ॥ ८६ ।
बडाभय-धरा बिली बिल्व-केशानु-वन्दिता ।
बिभ्रणीत-संपवर्गा बिभ्राभ्राकाश-वाहिनी ॥ ८७ ॥
बिभ्रश्र-बकुपालाख्या बन्दी बादि-सुवर्णिनी ।
बीज-लक्ष-समाख्याता बीज-युक्त-शिरोयुता ॥ ८८ ॥
बीज-मन्त्र-समालाख्या बीजाबीजात्मिका बजी ।
बर्हिर्बर्हिणी बर्हा च बर्हाक्षी बर्हि-मण्डला ॥ ८९ ॥
बर्हि-धारा बर्हि-वज्रा बर्हि-भूत-विनाशिनी ।
बाला-बाल-प्रबोधा च बर्हि-चूडामणि-स्तुता ॥ ९० ॥
बाजकी बञ्ज-रूपा च बञ्ज-दम्भ-प्रहारिणी ।
बिन्तकासी बीज-कीला बीलाबील-निवासिनी ॥ ९१ ॥
बिंधदा ब्राङ्किणी ब्रंङ्गी ब्रंङ्गाङ्गासक्त-मङ्गला ।
बिव्युकण्टा बिसुहारा बिण्डीरादि-समन्विता ॥ ९२ ॥
बलि-भिघ्ना बिडी-क्रूरा बैड-तन्त्र-समन्विता ।
बन्धुरी बन्ध-बान्धाली बन्ध-राज - बलेश्वरी ॥ ९३ ॥
बलभद्री बलेच्छा तु बलभद्र - प्रयोगिनी ।
बलभद्र - सुमात्रा च बलभद्र - सहोदरी ॥ ९४ ॥
बलभद्र-प्रिया बाङ्धिर्बाध्याबाध्य-विनाशिनी ।
बलभद्रेश्वरी बर्लो बलराकार - मण्डिता ॥ ९५ ॥

बलोत्कृष्टा बलोद्भोजा बल-शत्रु-निकृन्तिनी ।
बलरामेश्वरी बाल्या बाल्याबाल्य-विनोदिनी ॥ ९६
बलराम-प्रिया ब्रङ्की ब्रङ्किणी - गण-मध्यगा ।
बल-राज-बहिष्कारी बहिष्कारेश्वरार्चिता ॥ ९७
बहिष्कारी-कृता - देवा बहिष्कारासनेश्वरी ।
बहिष्कृत - महाभूता बहिरन्तः - प्रदीपिका ॥ ९८
बहु-सम्वित्-समायुक्त-पाणि-चक्र - विराजिता ।
ब्लाङ्कारी ब्ल्याङ्कारी च बांबींब्ल्यंब्ल्य-बीज-रूपिणी ॥ ९९
ब्राह-कारी ब्रुन्धराकारी बखगाक - सुवर्णिका ।
ब्लङ्किनी ब्लाङ्किनी ब्लुङ्की ब्लुङ्क-श्रीगण-सेविता ॥ १००
ब्लीकिनी ब्लीङ्किनी ब्लींग्री ब्लुङ्कह्री-गण-वन्दिता ।
ब्रङ्किटी ब्राङ्किटी ण्टी ब्रङ्किणी-नुत-पादिनी ॥ १०१
ब्रिङ्किटी ब्रीङ्किटी ब्रुण्डी ब्रुंकुटी ब्रुकुटी तथा ।
ब्रेङ्किटी ब्रैकिनी बंक्लीं-धारिणी ब्रुग-मालिनी ॥ १०२
ब्रौङ्किटी ब्रौङ्किनी बंमै-धारिणी बिल्व-लोचनी ।
ब्रङ्किनी ब्राहिकासक्ता ब्रःकोटी बुकु-कुण्डली ॥ १०३
बुत्कुण्डल -करासक्त - मनोबुद्धि - विराजिता ।
बीङ्कल-ह्रीं-धारिणी बीनी बङ्कलह्रीं-बिधारिणी ॥ १०४
बाक-पंक्ति-समावाहा श्रींह्रींऐंकं - विधारिणी ।
बहु-सम्पत्-समाध्याता ब्रह्म - कल्पामृतेश्वरी ॥ १०५
ब्रह्म-शास्त्र-समामोहा ब्रह्म - कर्मानुमण्डिता ।
बार्वासन-समाख्याता बुल-जाल - प्रमोहिका ॥ १०६

बहु-मासा बाहवी बान्धी ब्रह्म-पुत्रादि-पूजिता ।
बालार्किनी बाक-सह-मूल - बीजाक्षरी तथा ॥ १०७
बेदी-कृत - महा-द्वीपा बैंबैंबोंभूः-स्वरूपिणी ।
बाङ्करी बङ्क-अङ्करा ब्लोंब्लौंब्लंब्लः-स्वरूपिणी ॥१०८
बिल-ताल-प्रभावा-मांब्लांद्री-स्वरूपिणी तथा ।
बुभ्रू-रक्षाकरा बुंबिबुंॠ-कङ्क - हनु - क्रिया ॥ १०९
बुररेशी बुरकाक्षी बुभुसा-बुल्क-धारिणी ।
बलमानु-प्रवर्णा च बादि - डान्त - सुबीजका ॥ ११०
ब्लुहु-हाहा-हुहु-धारा ब्लोहोहा - हेह-बीजका ।
ब्लंहेहो-हहकी-बीजा ब्लेंल्हां-माकाग-धारिणी ॥ १११
बद्रकी-गण - संराज्ञी बद्र - रूपा बलायनी ।
बीजाघोरा बीजकासा बीज - गौण-गणेश्वरी ॥ ११२
बहु-वली-चतुर्युक्ता बुम्बुरी बुम्बुरेश्वरी ।
बुम्बराख्या-महा-नाम्नी बुररीकानुकूलिका ॥ ११३
हस्पति-समावन्द्या बुध्यगन्धानुकोलकी ।
बुध्यकी बुध्यकेशा च बुद्धी-कृत - सुवेणिका ॥ ११४
बलायमान-कोपा च बलि-कन्या - सुतेश्वरी ।
बलिकारा ब्रध्वावाहा ब्यंग्मंहंहुं-विधारिणी ॥ ११५
बकलद्री - महारूपा बींकलद्रीङ्क - रूपिणी ।
बोकलद्रौं-निराभासा बङ्कलद्रौं - स्वरूपिणी ॥ ११६
ब्लुङ्कलद्री-कृताकारा बुंसौःॐकार-रूपिणी ।
बिकलद्रां-कृताकारा बिन्द्रा ब्रीं-बीज-वेक्षिका ॥ ११७

ऐं क्लीं सौः-महाबीजा सौःक्लीं ऐं-वेश्म-धारिणी ।
बीण्डवाली विण्डोत्कृष्टासुर्बीड-द्रव - संयुता ॥ ११८
बोढच-तालु-सुमूला बिम्बोढी बारो बिकालिका ।
बिम्भक्ष-कोटि-चन्द्रार्का बिम्भाबिम्भ-निवासिनी ॥ ११९
बिलह्-कला बिभ्रि-काला बिम्भ-शेखर-सन्नुता ।
ब्रत्किसोर्ङ-बिल-कोटी बद्रि-पद्मासन-स्थिता ॥ १२०
ब्रल-धुरा ब्रल-छुभ्रा बृग-कृद् बाकषी-वषी ।
ब्रणीक्षर-समायुक्त-माला - मन्त्र-विराजिता ॥ १२१
ब्रगात्पूर्णा ब्रग-ग्राह्या ब्रण्याब्रण्य - विर्वाजिता ।
ब्र०द्-बुर्ण्यं-ब्रणित्सर्पा ब्रण्यागो ब्रण्य-वासिनी ॥ १२२
बुर्कघ्ना बुकिलासक्ता बुक - किङ्कर-वन्दिता ।
बुगस्मुगित-मानाक्षी बुटाका-नट-वस्त्रिणी ॥ १२३
ब्रणि-श्रोत्र-महाशब्दा ब्रणत्कीलक-भुम्भुजा ।
बुकि-भुकत-मानेशी बुर्भ-मण्डल - बिण्डरा ॥ १२४
बिकटा बिकटाघोरा बीडकोत्कर्ष-र्दविका ।
बिडारक्त-प्रभावा च बीडम - द्रुम-मण्डला ॥ १२५
बिध्याकारा बधी बाध्नी बन्धगाद्य-सुबीजकी ।
ब्निक-बाङ्क-स्वरूपा च बिड-गिज्या बिडायनी ॥ १२६
बिम्भूताभ-समायुक्त - मन्त्र-प्रेत-विनाशिनी ।
बिङ्गी-गण्डा-रवा बों-ब्रीं-बिङ्गेद्या बिङ्गहेलिका ॥ १२७

बिग्य-देव-वरा ब्रोह्नि-धारिणी बिंस-रूढ़िका ।
बिल्क-तत्वार्थ-संयुक्ता बिल्केशी बिल्क-रूपिणी ।। १२८
बिल्क-बीज-समावृत्या बिल्काबिल्क-विहारिणी ।
बिल्क-गुह्या-याचमाना बिहणी बाणही बिही ।। १२९
बिहणार्थ-प्रपादी च बिरणी-गण-वन्दिता ।
बिहणासक्त-जीवा च बिन्द-पञ्चेश्वरीङ्गणी ।। १३०
बिन्दाबिन्द-सुमालास्या बिन्द-राक्षस-भञ्जनी ।
बिट-पुत्रादि-निध्वंसा बिट्टिणी-वृन्द-वन्दिता ।। १३१
बिट्-ऋसद्वापमानाख्या-बिट्-ऋधारा च बैतकी ।
बिट्-पटरी बिट-ऋरी बिद्राबिद्र-विनोदिनी ।। १३२
बिद्य-कान्त-सुवर्णाख्या बिद्रोसी बिद्र-कङ्काली ।
बिद्रासुर-प्रमोहा च बिद्रोत्कर्षा च बिद्र-भृत् ।। १३३
बिललिता बिलोत्पाटा बिल्व-लिटेश-वन्दिता ।
बिभ्रि-कम्भोल-विश्वाख्या बिभ्रत्-कुण्डल-मण्डिता ।।१३४
बिछुहारा बिलुल्हा च बिभ्रत्-किन्न-स्वरूपिणी ।
बिछु - कछुप - हारा च बिककख्यानुकूलिनी ।। १३५
बिचम्भरी बिचोत्कृष्टा बिच्याबिच्य-बिलासिनी ।
बिच्य-कालक-कङ्काली बिच-कङ्काल-मालिका ।। १३६
बिन्क-विनृ-विला-माला बिन्क-साक्षाच-कारिणी ।
बलम्बली-विश्रुहाणी बिस्राबिस्रनिवासिनी ।। १३७
बिद्व-कद्व-कथा बिड्वी बिड्वाबिड्व-तसान्तरा ।
बिडवाहा बिड्-विरक्ता बिड्क-दूषक-धारिणी ।। १३८

बुद्धक्षर - समायुक्ता बिड्-वारियानुवर्तिनी ।
बिकटाक्ष - लसोद्याना बिकटाङ्ग-स्वरार्चिता ॥ १३९
बिसत्-बृस्ना बिषद्रामा बिष-देवा बिषत्-प्रभा ।
बिष्ट-भाला बिल-लोला बलम्भोक-गुणात्मिका ॥ १४०
बिष-हादा बिषत्-सूर्या बिकधो बिधराधरा ।
बिकव्यम्भा बिषड्-धोरा बिण-णंणो बिणायुधा ॥ १४१
बिण-माता बिणच्पाया ब्रिनु-चर्चा ब्रिनुत्-प्रभा ।
ब्रिस्थ-हालहला-युक्ता बिष्करणी बिष्क-रूपिणी ॥ १४२
बिष्कान्तस्था बुनत्स्वर्णा बुनकी बुष्कि-धासिनी ।
बृष्पासुर-विभेदा च ब्रष्पाब्रष्प - करिरिणी ॥ १४३
बृषम्भुला बषोम्भाला बभ्रु दभ्रु -भयङ्करी ।
बङणी बङणा बंग्णाबंग्ण-गोरण-सुशास्त्रिणी ॥ १४४
बिणिरणी-गण-मोहा च बिगिंडी-द्रध-पद्मका ।
बिल्कु-काकी बिल-कृता बलु-केशानुमण्डिता ॥ १४५
बिल्यु-लुहा बिलु-वासा बिल्क-मित्रादि-कृन्तनी ।
बिस्क-लोला बिंहि-धरा बिङ्गी बिम्बि-सरूषिका ॥ १४६
बिङ्गिडी बगला बिम्बा ब्रोणुणी ब्रुहु-हूं-हकी ।
बिब्रु-काक-हकासाला बिजदज्ब-सुदब्रिका ॥ १४७
बिलद्-द्वेषा बिल्कु-लंक्या बिम्भु-लाहु-हकाधरा ।
लिल्मि-मस्मि-मलन्माला ब्रिल्मि-भूषा ब्रिजिङ्कुरा ॥ १४८
बिल्मेशी बिल्म-देवेशी बिल्माबिल्म-विवादिनी ।

बिल्मांकुस-रुजा बिल्मी बिल्म-मध्यानुवर्तिका ॥ १४९

बिल्मखण्डा बिल्म-भीमा बिल्माबिल्म-विनायकी ।

बिल्म-छत्र-कराम्भोजा बल्मिणी बल्म-ग्रन्थिका ॥ १५०

बल्मि-धूता बल्मि-वीजा बल्मि-गन्ध-विलेपनी ।

बल-हाल्य - हलाकारा बम्ण-बम्रा-सुबम्णिका ॥ १५१

बरा-वस्त्रा बराी-भूतिर्बणि-चण्ड-विभञ्जनी ।

बृहद्-गरा बृहन्माणा बरा-कीराी बराी-घनी ॥ १५२

बरान्माता बरान्मान्या बण-वीणा वणङ्करी ।

बणत्कोशा बिही बोरवभी बोष-निवासिनी ॥ १५३

बोख-वीजा बखो-क्रूरा बिखाबिख्य-विवादिनी ।

बोखरी बीखदा बाखी बख्राबख्र-निवारिणी ॥ १५४

बिखन्मूला बिलापट्टा बिट्ट - पदेश्वरार्चिता ।

बिलुलन्धी बल-ब्रम्भी बिम्भाबिम्भ-विधारिणी ॥ १५५

बिकलण्टी बिल-हन्धी बिलद्-गन्ध-शिवात्मिका ।

बल्वु-किटिर्बंमु-लुटी बल्कललपा बिलाम्रिकी ॥ १५६

बिल्क-षष्टा बिल्क-स्रष्टा बिल्काबिल्क-निवासिनी ।

बिष-निष्टा बिलु-लुहा बिलिर्बल्या बिलीषिका ॥ १५७

बृह-गुहा बृहेशानी बृह-माल्या बृहङ्करी ।

बृह - पुत्रा बृषीदंघ्रिर्बंहु - बम्भल - धारिणी ॥ १५८

बिकु-लल्का बिलुम्रोरा बिभचष्का च बीजरा ।

बिल्मु-लुत्या बिकुम्भ्ररा बिगुह्या बिल्क-वालिरा ॥ १५९

बभि-कुष्टापहारा च बभृ - भम्भण्ड-धारिणी ।

बज्ल-कोला बज्ज-गात्रा बज्ज-गोजा बतन्मयो ॥ १६०
बेद - तत्त्व - समुद्भूता बग-गीला बलाशिनी ।
बल-हीङ्कारिणी बीषिर्बीण-कोटि-सुसक्तिका ॥ १६१
बक-लक्ष - महाकोटि - चतुःषष्टि - सुयोगिनी ।
बीती - लक्ष - महानन्त - भैरवा बुबुगालिका ॥ १६२
बुध - लक्ष - महाकोटि - विष्णु-रुद्र-गणेश्वरो ।
बिभ्रद्-दर्पण-हस्ता च बिभ्रत्-कोकिल-मण्डिता ॥ १६३
बिभ्रद्-पद्म - समाख्याता बिबुभू-भू-भयङ्करी ।
बिभ्रच्छक्ति-गदा-हस्ता बीज-पंक्ति-समन्विता ॥ १६४
बीज-जङ्घा बलो बीलो बीजराम-सुरेश्वरी ।
ब्रडवानल-महाज्वाला बाणली बाण-मध्यगा ॥ १६५
बुभ्व-वन्द-वडी बाम्ही बाह्लीकासुर-त्रोटिनो ।
बह्लाबह्लेश्वरी बह्लो बह्लोका बह्लि-आनना ॥ १६६
बह्ली-रूपा बढी-जाढो बह्लाबह्ल-स्वरूपिणी ।
बल-विन्दु-प्रभा चैव बल-योगिनिका तथा ॥ १६७
बल-सक्त - महायोगा बिन्दु-रुद्रा बिढत्-करा ।
बिनुनुर्णा बिहत् - पूजा बिरुद्ध - कटलायुता ॥ १६८
बिल्कु-कूट-त्रया ब्रह्मी बोरु-काला बिर्दुद्धिनी ।
ब्रमलाम - महानत - विरावलि - विसंयुता ॥ १६९
बकारोत्तम-वीजा च बाला - त्रिपुर - सुन्दरी ।
बध्वी-लत-महादेवो बाल - लावण्य - लालिता ॥ १७०
बहु-वर्षा बहु - जन्मा बहु - पादा बल-व्रता ।

बहु-हस्ता बहु-श्रोता बहिर्भूमि-वरेश्वरी ॥ १७१

बहिर्लिङ्गा बृहन्माता बाहिरी बलि-चक्रिणी ।
बल-कुट्टकी बाह्मी बह्मिका बद्रि-खड्गिनी ॥ १७२

इदं नाम-सहस्त्रं च वीज-मन्त्रात्मकं शिवे ।
वार-त्रय - समायुक्तमुच्चरेच्छिव - शक्तिके ॥ १७३

भूत-प्रेत-विनाशश्च ललिता-नामभिः समम् ।
मूल-मन्त्र-स्वरूपं च भवेद्भूधर-नन्दिनि ॥ १७४

भोग-मोक्ष-प्रदं देवी त्रिपुरा या सुर-प्रिये ।
सर्व-ज्वर-विनाशश्च वने वह्नौ जलेऽपि च ॥ १७५

पवने च महा-रोगे रक्षेद् बाला शिवेश्वरी ।
उपासकं पुरुषं देवी प्रालयेत् पाप-नाशिनी ॥ १७६

प्रयोगानां च भूतानां षण्णां मन्त्र-प्रयोगिका ।
महा-बाला महा-देवी गोप्ता पर-कुलेश्वरी ॥ १७७

करुणां देव-देवेशि पूर्णां कुरु शिवायुधा ।
कलि-कण्ट-महा-ग्रस्ते सर्व-मङ्गल-सञ्चरे ॥ १७८

इति श्री महोत्तर-योगिनी-विद्याया शिव-शक्ति-सम्वादे महापटले
बकारादि-बाला-त्रिपुरा-सहस्रनाम सम्पूर्णम ॥